# सहानुभूतिमन्तः स्याम

द्विसहस्राधिकवर्षेभ्यः पूर्वम् एव तमिलुकविः एलङ्गो-अडिगलुवर्यः 'शिलप्पधिकारम्'-नामके स्वकीये महाकाव्ये लिखितवान् अस्ति - 'कृष्णमेघान् स्पृशन्तः पर्वताकाराः महातरङ्गाः' इति। ते तरङ्गाः 'पूम्पहार'नगरं समग्रतया अनाशयन् इति तत्र वर्णितं दृश्यते। किं ते तरङ्गाः 'सुनामी'नामकाः एव ? सुनामीशब्दः एषः जपनीयभाषामूलः। 'सु' (Tsu) नाम 'नौकापत्तनम्' इति। 'नामी' (Nami) नाम 'तरङ्गाः' इति। वस्तुतः एते तरङ्गाः 'राक्षसतरङ्गाः' इति निर्देष्टुं योग्याः। इण्डोनेशिया, मलेशिया, थायूल्याण्ड्, म्यान्मार्, माले, श्रीलङ्का इत्यादीनां देशानाम्, अन्दमानादिद्वीपानाम्, आन्ध्रप्रदेशोत्कल पाण्डिचेरितमिलनाडुकेरलादीनां पश्चितीरीयाणां च भूभागेषु निवसतां द्विलक्षाधिकानां जनानाम् असून् अहरन्। सहस्रशः जनाः कुत्र गताः इति न ज्ञायते। असङ्ख्याः जनाः निराश्रयाः, अनाथाः वा जाताः सन्ति।

इण्डोनेशियादेशे सुमात्राद्वीपतीरे यः ८.९ रिक्टर्परिमाणकः भूकम्पः जातः सः एव सुनामीतरङ्गाणां मूलम्। एते तरङ्गाः १००० कि.मी.वेगेन आगताः । १८०० - २००० कि.मी.दूरम् अतिक्रान्तवन्तः च । जनाः तु एतेषाम् आगमनविषये सर्वथा अनभिज्ञाः आसन्। डिसेम्बर्मासस्य २६ तमस्य दिनाङ्कस्य प्रातः जनाः बङ्गालखात-सम्बद्धान् समुद्रतीरप्रदेशान् गतवन्तः आसन् विरामसुखानुभवाय। केचन समुद्रजले पदं स्थापितवन्तः आसन्, पुनः केचन समुद्राभिमुखाः च। तावता तरङ्गाणाम् आघातः प्राप्तः। सर्वे समुद्रे विलीनाः जाताः। मत्स्यग्राहिणः, तेषां नौकाः, जालानि, गृहाणि, तदीयानि सर्वाणि च विनष्टानि। सहस्रशः जनाः वृत्तिहीनाः आश्रयहीनाः च जाताः।

तत्र जनानां, स्थालानां, सम्पत्तीनां च या हानिः जाताः तां वर्णयितुं शब्दाः न अलम्। प्राणापायं गतेषु प्रायः $1/3$ मिताः विविधवयस्काः बालाः एव स्युः इति तर्क्यते। मृतानां विषये अश्रुपातनात् ऋते अन्यत् किमपि कर्तुं न शक्यते, किन्तु सजीवं स्थितानां विषये बहु कर्तुं शक्यते, करणीयम् अपि। ये सजीवं स्थिताः तेषु विकलाङ्गतां गताः, अनाथतां गताः, गृहहीनाः, भग्नाशाः इत्यादयः विविधस्थितिवन्तः सन्ति। अस्माकं साहाय्यम् एव अवलम्बते ते। अतः पुनर्वसतिव्यवस्थादयः तान् काले प्राप्नुयुः।



- प्रकाशकः



**चन्दमामा** सम्पुटः - २१ फेब्रवरी - २००५ सञ्चिका - ११



## अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः














**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, **CHENNAI - 600 097**

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**

**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः, बि.नागिरेड्डिः च**

# बालानाम् अधिकारः

१९८९ तमवर्षस्य नवम्बर्मासस्य २० तमः दिनाङ्कः जगति स्थितानां बालानां दृष्ट्या प्रमुखम् आसीत् । यतः तस्मिन् दिने विश्वसङ्घस्य सामान्यसभायां बालानाम् अधिकारस्य विषये प्रस्तावः पारितः । अग्रिमेषु दिनेषु १९२ देशैः एषः प्रस्तावः अङ्गीकृतः अपि ।

बालानां के अधिकाराः उक्ताः संविधाने ? प्रथमः अंशः स्वास्थ्यविषये । स्वस्थं जीवनं यापयितुं तेषाम् अस्ति अधिकारः । यावत् बालाः मातापितृभ्यां सह भवन्ति तावत् तेषाम् आरोग्यस्य विषये अवधानदानं मातापित्रोः कर्तव्यम् । अस्वास्थ्यपीडा यथा न भवेत् तथा जागरूकता वोढव्या ताभ्याम् ।

अग्रिमः अंशः शिक्षणसम्बन्धी । बहुषु देशेषु निर्दिष्टस्तरपर्यन्तं शिक्षणं निश्शुल्कम् अस्ति । बालेषु अध्ययनप्रवृत्तेः प्रोत्साहनाय केचन देशाः विद्यार्थिवेतनम् अपि यच्छन्ति । विद्यालयम् आगतः बालः मध्ये शिक्षणं यथा न परित्यजेत् तथा अवधानदानं तु शिक्षकसमूह-विद्यालययोः कर्तव्यम् ।

इदानीं तु स्वस्य परिसरस्य अवगमनाय बालानां कृते सन्ति अनेके अवकाशाः । तस्मात्, गृहे मातापितृभ्यां याः समस्याः सम्मुखीक्रियन्ते ताः अपि सहजतया अवगन्तुं शक्नुयुः एव ते । अतः मातापितरः बालान् अपि विश्वासपात्राणि मत्वा तैः सह स्वसमस्यायाः विषये चर्चां विदध्युः । स्वस्य अभिप्रायान् प्रकाशयितुम् अपि बालाः अधिकारम् अर्हन्ति एव ।

बालाः स्वस्य अधिकारान् यथा, तथा स्वस्य कर्तव्यानि अपि अवगच्छेयुः । मातापित्रोः विषये प्रीतिगौरवादिप्रदर्शनं करणीयम् इत्यंशः तैः ज्ञातव्यः । ज्येष्ठानां हिताय प्रयासः विधेयः इत्यंशः अपि तैः अवगन्तव्यः । बालाः उत्तमाः नागरिकाः यथा स्युः तथा तेषां वर्धनाय विद्यालयाः योग्यानि पदानि निक्षिपेयुः ।

*सम्पादकः* – **विश्वम्**

Visit us at : http://www.chandamama.org



वाचकानां कृते कथास्पर्धा - परिणामः (अगस्ट्)

# मित्राय कृतम्...

अधिकारिणौ विजयं मनोहरं च यदा 'मृगयानुमतियत्रं दर्श्यताम्' इति उक्तवन्तौ तदा विजयः स्मृतवान् यत् अरण्य-प्रवेशसमये मनोहरेण उक्तम् आसीत् - 'आगमनसमये त्वराकारणतः मया अनुमतिपत्रं विस्मृत्य आगतम् इति'। मित्रस्य मनोहरस्य संरक्षणाय सः कञ्चित् उपायं कृतवान्। सः ततः धावनम् आरब्धवान्। एतत् दृष्ट्वा क्रुद्धौ अधिकारिणौ अनुसृत्य धावन्तौ तं गृहीतवन्तौ। विजयः स्वसमीपे



स्थितम् अनुमतिपत्रं दर्शयन् अवदत् - "मां किमर्थम् अनुसरतः भवन्तौ ? मम समीपे तु अनुमतिपत्रम् अस्ति एव" इति। तदा आश्चर्यं प्राप्तवन्तौ अधिकारिणौ तस्य अनुमतिपत्रस्य वैधताम् अवगत्य पृष्टवन्तौ - "अनुमतिपत्रे सत्यपि किमर्थं धावितं भवता ?" इति।

विजयः वस्तुस्थितिं विवृण्वन् तौ अवदत् - "मित्रस्य रक्षणाय मया एवं कृतम्। भवन्तौ माम् अनुसृत्य अत्र आगतौ । एतावता मम सुहृत् पलायितवान् भवति।"

विजयस्य चतुरतां मित्ररक्षणास्थां च दृष्ट्वा अधिकारिणौ सन्तुष्टौ एव । असत्य-कथितम् इत्यतः विजयस्य, अनुमतिपत्रं विनैव मृगयार्थम् आगतम् इत्यतः मनोहरस्य च दण्डः भवेत् इति तयोः आशयः आसीत्। अतः तौ विजयं मनोहरं च स्वकार्यालयम् आनाय्य उक्तवन्तौ - "दण्डात् रक्षणं प्राप्तव्यं चेत् भवद्भ्यां मृगयाव्यसनं सर्वथा परित्यक्तव्यं, लक्ष्यच्छेदरूपे कार्ये कौशलं सम्पादनीयं च। तस्मात् यशः धनं च लप्स्यते, वन्यपशूनां प्राणहानिश्च निवारिता भविष्यति" इति। विजयमनोहरौ एतं प्रस्तावं सहर्षम् अङ्गीकृतवन्तौ।

**अनुभव अग्रवालः**

ब्लूमिङ्ग् बड्स् पब्लिक् स्कूल, (पेट्रोल्पम्प्निकटे)

भगवतीगञ्ज्, बलरामपुरम् - २७१ २०१

# सिद्धार्थस्य गणितम्

गौतमः गीतापुरस्य निवासी । तस्य पुत्रः सिद्धार्थः । सः षड्वर्षीयः । गौतमस्य पुत्र्याः नाम पावनी इति । सा त्रिवर्षीया । सिद्धार्थः महाबुद्धिमान्, गणनादिषु चतुरः च इति जनाः वदन्ति स्म ।

कदाचित् सुगन्धपुरतः गौतमस्य श्यालः माणिक्यः भगिनीपुत्रयोः दर्शनार्थम् आगतः । सः आगमनसमये दश गोलिकाः आनीतवान् आसीत् । स्वकोषात् ताः गोलिकाः निष्कास्य सिद्धार्थाय यच्छन् सः अपृच्छत् - ''अये सिद्धार्थ ! एतासाम् अर्धभागः यदि भवता भगिन्यै दीयेत तर्हि भवत्समीपे कति गोलिकाः अवशिष्येरन् ?'' इति ।

तदा सिद्धार्थः अवदत् - ''सप्त अवशिष्यन्ते'' इति ।

सामान्यस्यापि गणितप्रश्नस्य उत्तरम् असमीचीनतया उक्तम् इत्यतः माणिक्यः खिन्नः । सः पुनरपि सिद्धार्थम् अवदत् - ''भवान् मम प्रश्नं सम्यक् न श्रुतवान् इति भाति । भवत्समीपे याः दश गोलिकाः सन्ति तासाम् अर्धभागः यदि भगिन्यै दीयेत तर्हि भवत्समीपे कति अवशिष्येरन् ? विचिन्त्य वदतु'' इति ।

''मया उक्तं खलु - मत्समीपे सप्त गोलिकाः अवशिष्यन्ते इति'' इति मन्दहासपूर्वकम् अवदत् सिद्धार्थः ।

''भवान् मन्दबुद्धिः इति भाति । भवान् महाबुद्धिमान् इति श्रुतम् आसीत् मया । किन्तु भवान् सामान्यस्यापि गणितप्रश्नस्य उत्तरं सम्यक् न जानाति'' इति अवदत् माणिक्यः ।

''अहं गणितं सम्यक् एव जानामि । मम भगिनी गणितं किञ्चिदपि न जानाति खलु ? सप्त अवशिष्यन्ते इत्यस्य रहस्यम् अत्र अस्ति'' इति अवदत् सिद्धार्थः ।

एतत् श्रुत्वा माणिक्यः आश्चर्येण स्तब्धः । सिद्धार्थः महाबुद्धिमान् इति जनाः यत् वदन्ति तत् युक्तम् एव इति अवगतवान् सः ।





# राजबन्धुः

पुरा प्रवृत्ता कथा एषा । विशालदेशस्य कश्चन भागः महानगरम् इति । तस्य नगरस्य आदर्शनगरम् इति ख्यातिः अपि आसीत् । यतः देशे अन्यत्र सर्वत्र दुर्भिक्षः भवति चेदपि तस्मिन् महानगरे सर्वदा सुभिक्षः एव । अस्य कारणस्य विषये जनानाम् अभिप्रायाः विभिन्नाः । केचन वदन्ति – तत्रत्या भूमिः कृषियोग्या इति । अन्ये केचन वदन्ति – तत्रत्याः जनाः सज्जनाः इति । बहूनां जनानाम् अभिप्रायः तु – नगररक्षकस्य हेमशङ्करस्य परिश्रमः प्रभावः च एव अत्र कारणम् इति ।

हेमशङ्करः अनेकेषु शास्त्रेषु कृतभूरिपरिश्रमः । आडम्बरजीवनम् अनिच्छन् सः सरलजीवनमेव इच्छति स्म । तस्य वासार्थं राजभवनम् एकम् आसीत् । किन्तु सः जनानां मध्ये एव कुत्रचित् कुटीरे स्वपरिवारेण सह वसति स्म । नगरसम्बन्धीनि कार्याणि कर्तुं राजभवनं गच्छति स्म । तत्र सामान्यानां जनानां मेलनेन तेषां समस्याम् अवगच्छति स्म । ततः तासां समस्यानां परिहारार्थं योजनां रूपयति स्म ।

नगरस्थाः जनाः हेमशङ्करविषये आदरपूर्णाः । किन्तु तस्मिन् नगरे एव स्थितः कश्चन राजबन्धुनामकः हेमशङ्कराय असूयति । सः महाधनिकः । तस्य सम्पत्तिः कियती इति गणना अपि कष्टाय एव । किन्तु राजबन्धोः सर्वदा चिन्ता एव – महाधनिकस्यापि मम समाजे विशेषादरः नास्ति इति । जनाः तं धनिकमात्रं परिगणयन्ति स्म, न तु विशेषादरपात्रीभूतम् ।

राजबन्धोः पत्न्याः नाम राज्ञीबन्धुः इति । सापि राज्ञ्याः दूरबन्धुः एव । कदाचित् पतिपत्न्योः मध्ये जनादरविषये कीर्तिविषये च चर्चा प्रवृत्ता । उभयोः अपि मनसि एकं तु सुनिश्चितं यत् केनापि प्रकारेण आदरः कीर्तिश्च प्राप्तव्या इति ।

तौ एवं चिन्तितवन्तौ – 'दाने प्रसिद्धः शिबिः, ययातिः, बलिः इत्यादयः सर्वेऽपि

चक्रवर्तिनः आसन् । दानशूरः कर्णोऽपि यदा अङ्गदेशस्य राजा अभूत् तदा एव कीर्तिं प्राप्तवान् । अनेन ज्ञायते यत् आदरः कीर्तिश्च अधिकारसम्बद्धा इति । अपि च अधिकार-रहितः कोऽपि एतादृशीं प्रतिष्ठां कीर्तिं वा न प्राप्तवान् एव । तादृशम् एकम् उदाहरणमपि नास्ति' इति ।

ततः राजबन्धुः उक्तवान् - ''यः स्वयं प्रतिभावान् भवति सः तु अधिकारेण विनापि कीर्तिं प्राप्नुयात् । अहं तु स्वयं प्रतिभावान् एव, किन्तु न महापुरुषः । अस्मादृशानां तु जनानुरागः, प्रसिद्धिः च सर्वथा आवश्यकी एव । अतः अविलम्बेन आवां राजानं राज्ञीं च दृष्ट्वा प्रार्थयावहे यत् अहं नगररक्षकस्थाने नियोजनीयः इति । मम वचनं राजा न तिरस्करोति इति विश्वासः अस्ति मम'' इति । ततः द्वौ अपि राजधानीं गतवन्तौ ।

राजबन्धुराज्ञीबन्ध्वोः वचनं श्रुत्वा राजा चिन्तायां निमग्नः । किञ्चित् विचिन्त्य सः उक्तवान् - ''भवन्तं नगररक्षकत्वेन नियोक्तुम् अहं सिद्धः एव । किन्तु महानगरं सर्वेऽपि आदर्शनगरमिति भावयन्ति । तत्र प्रतिदिनमपि समृद्धिः वर्धमाना एव अस्ति । अस्याः समृद्धेः मूलं कारणं नगरपालकः हेमशङ्करः एव इति सर्वेषाम् अभिप्रायः । तादृशस्य अधिकारात् अवतारणं न समीचीनम्'' इति ।

तदा राजबन्धुः उक्तवान् - ''प्रभो ! महानगरं सुभिक्षं सुसम्पन्नं च । अत्र कारणं तु तत्रत्यानां परिश्रमः एव । तेन सह सर्वे हेमशङ्करस्य नाम योजयन्तः सन्ति । यः हेमशङ्करः इदानीम् एतादृशीं प्रशंसां प्राप्नुवन् अस्ति सः



एव विशालदेशस्य राजा अपि यदि भवेत् तर्हि समीचीनं स्यात् इति वदन्ति ते । एतादृश्याः प्रशंसायाः स्थगनं करणीयं भवता । नो चेत् भवतः सिंहासनमेव कम्पेत'' इति ।

एतावत्पर्यन्तं राज्ञः विचारः अस्यां दिशि न प्रवृत्तः एव आसीत् । राजबन्धोः कथनेन तस्यापि मनसि संशयः उत्पन्नः यत् कदाचित् हेमशङ्करः मम अपि प्रतिस्पर्धी भवेत् इति ।

गभीरचिन्तनेन राज्ञः राज्ञ्याः च मनसि कश्चन उपायः स्फुरितः । तदनुगुणं महानगरं प्रति राजा कञ्चन दूतं प्रेषितवान् । स दूतः आगत्य हेमशङ्करम् उक्तवान् - ''भवतः परिपालनेन महानगरं समृद्ध्या शोभमानम् अस्ति । अतः महाराजः इच्छति यत् समग्रः देशः एतादृशीम् समृद्धिं प्राप्नुयात् इति । तदर्थं राजा भवतः साहाय्यम् अपेक्षते । अतः भवान्



राज्ञः आप्तसहायकः भवतु । भवतः स्थाने राजबन्धुः नगरपालकत्वेन नियोक्ष्यते'' इति ।

एवं राजबन्धुः नगरपालकः अभवत् । सः आत्मानं परितः तादृशान् एव नियोजितवान् ये सर्वदा तं प्रशंसेयुः । तेषां द्वारा सः नगरे सर्वत्र प्रचारं कारितवान् । तेन तदीया प्रतिष्ठा प्रवृद्धा जाता । अतः राजबन्धुः तृप्तिम् अन्वभवत् ।

हेमशङ्करः राज्ञः सूचनानुगुणं राजधानीं प्रति आगतवान् । अनेकेषु विषयेषु सः राज्ञे उत्तमाः सूचनाः ददत् राज्ये तासाम् अनुसरणे कारणीभूतः अभवत् । तस्य सूचनानां कारणतः राज्यं सुभिक्षं सुसम्पन्नं च अभवत् ।

वर्षद्वयम् अतीतम् । महानगरे महत् दुर्भिक्षं जातम् । यस्मिन् नगरे दुर्भिक्षस्य नाम अपि जनैः न श्रुतम् आसीत् तत्र इदानीं जनानां हाहाकारः श्रूयते स्म । आहारप्राप्तिः किं, पातुं जलमपि नासीत् तत्र । राज्ञा यदा एषा वार्ता ज्ञाता तदा सः - 'महानगरस्य एतादृश्याः परिस्थित्याः कारणं किमिति ज्ञात्वा आगच्छतु' इति उक्त्वा हेमशङ्करं महानगरं प्रति प्रेषितवान् ।

मन्त्रिणः राजानम् उक्तवन्तः– ''इदानीं समग्रः देशः सम्पन्नः अस्ति । किन्तु महानगरमात्रे दुर्भिक्षः । हेमशङ्करस्य शासनकाले तत्र सर्वम् अपि सुसम्पन्नम् आसीत् । यद्यपि तस्य सूचनानगुणमेव अस्माकं देशे एतादृशः सुभिक्षः एतादृशी सम्पत्तिश्च, तथापि महानगरे कष्टमयी परिस्थितिः । अतः राज्ञा भवता तादृशः निर्णयः स्वीकरणीयः, येन पुनः महानगरं सुसम्पन्नं भवेत् । तेन समग्रस्य राज्यस्य वर्धनं भवेत्'' इति ।

राजा अनङ्गीकारं सूचयन् मन्त्रिणः पृष्टवान् - '' भवतां चिन्तनेषु दोषः अस्ति । यस्य सूचनया देशः यथा सुसम्पन्नः अभवत् तथा महानगरेण अपि सुसम्पन्नेन भवितव्यम् आसीत् । यतः महानगरमपि देशस्यैव कश्चन भागः किल ?'' इति ।

तदा मन्त्रिणः झटिति उक्तवन्तः - ''अस्य उत्तरं राजबन्धुना एव दातव्यम् । राजबन्धुः राजादेशं समीचीनतया पालयन् अस्ति उत न इति आदौ ज्ञातव्यम्'' इति ।

मान्त्रिणां वचसि सत्यांशः अस्ति इति राज्ञः अभासत । अतः तस्य परीक्षणार्थं सः स्वयं महानगरम् आगतः । तत्रत्यां परिस्थितिं दृष्टवतः राज्ञः महत् दुःखम् अभवत् । पूर्वं यत् नगरं स्वर्गसदृशम् आसीत् तस्य नगरस्य

अवस्था इदानीं शोचनीया जाता आसीत् । दरिद्राः असहायकाः । धनिकानां चोरभीतिः । जनाः रोगपीडिताः । एतत् सर्वं पश्यन् राजा नगरप्रवेशम् अकरोत् । राजबन्धुः राज्ञः वैभव-पूर्णं स्वागतं कृतवान् । स्वानुचरैः राज्ञः प्रशंसाम् अपि कारितवान् ।

राजभवनं प्राप्य राजा हेमशङ्करम् आहूतवान् । हेमशङ्करः आगत्य– ''प्रभो ! अस्मिन् नगरे सर्वत्र अनीतिः प्रसृता वर्तते । स्वार्थिनः अधिकारिणः कार्ये नियुक्ताः सन्ति । अत एव अस्य नगरस्य स्थितिः शोचनीया जाता । यदि वर्षद्वयं महानगरस्य रक्षणभारं मह्यं दीयेत तर्हि अहं तत् महानगरं पूर्ववत् सुसम्पन्नं करिष्यामि'' इति उक्तवान् ।



तदा राजबन्धुः स्वस्य समर्थनं कुर्वन् उक्तवान् - ''राजन् ! सर्वाणि दिनानि न समानानि भवन्ति । नगरस्य अस्याः दुःस्थितेः कारणं अधिकारिणः न, प्रत्युत दैवलीला एव । इतोऽपि मासद्वयं समयः यदि दीयेत तर्हि अहम् एतत् नगरं पुनः सम्पद्युक्तम् करिष्यामि'' इति ।

राजा राजबन्धुं हेमशङ्करं च पुनः पुनः पश्यन् हेमशङ्करं पृष्टवान् - ''राजबन्धोः वचनं सत्यम्, उत भवतः वचनम् ?'' इति ।

तदा हेमशङ्करः महता विनयेन उक्तवान् - ''राजन् ! राजबन्धोः वचनं न असत्यम् । किन्तु अहं यदा अत्र आसं, तदा अहं जनानां मध्ये वसामि स्म । राजबन्धुः राजभवने निवसति । प्रजाः मां यथा स्वसमस्याः वदन्ति स्म तथा राजबन्धुं वक्तुं ताः न शक्ताः । अतः समस्याः काः कीदृश्यः इत्यपि राजबन्धुः न जानाति'' इति ।

राजबन्धुः एतम् आरोपं निराकुर्वन् - ''प्रभो, मम प्रजानां च मध्ये स्नेहभावः अस्ति इति अहं प्रदर्शयिष्यामि । एतत् ज्ञातुं कश्चन मार्गः अस्ति । आवाम् उभौ अपि नगरे कांश्चन जनान् मिलाम । तदा सत्यांशः ज्ञायेत'' इति उक्तवान् ।

तदा राजा उक्तवान् - ''अस्तु । अहं वेषपरिवर्तनं कृत्वा भवता सह आगमिष्यामि । ततः हेमशङ्करेण सह गत्वा जनाभिप्रायं ज्ञास्यामि'' इति ।

तदनुगुणं वेषान्तरं धृत्वा राजा राजबन्धुना सह नगरे अटितुम् उद्युक्तः । आदौ कस्यचन धनिकस्य गृहं तौ गतौ । तस्य धनिकस्य गृहे केभ्यश्चित् दिनेभ्यः पूर्वं चोराः लक्षं रूप्यकाणि अपहृतवन्तः आसन् । अपहरणसमये प्रतिरोधं

कृतवन्तौ धनिकपुत्रौ व्रणितौ जातौ । एतौ दृष्ट्वा सः धनिकः रोदनम् आरब्धवान् । तदा गृहजनान् सान्त्वयन् राजबन्धुः स्वयमपि रोदितुम् आरब्धवान् ।

ततः तस्मात् गृहात् बहिः आगतः राजबन्धुः राजानम् उक्तवान् - ''महाराज ! मयि जनानां कियान् आदरः अस्ति इति ज्ञातं किल भवता ? गृहजनैः सह वार्तालापसमये अहं दुःखं सोढुम् अशक्तः अभवम् । प्रजाः कथं मया सह व्यवहरन्ति इति भवता प्रत्यक्षं दृष्टम् एव'' इति ।

ततः अन्यान् कांश्चन जनान् तौ मिलितवन्तौ । तेषु केचन धनिकाः, केचन दरिद्राश्च आसन् । सर्वत्रापि सः एव क्रमः । रोदनं, सान्त्वनम् इत्यादिकं पुनरावर्तते स्म ।

तद्दिने एव सायं हेमशङ्करेण सह राजा नगरपर्यटनं आरब्धवान् । यत्र एतौ गतौ तत्रापि जनानां परिस्थितिः दुःखकरी एव आसीत् । किन्तु हेमशङ्करः तैः जनैः सह प्रीत्या व्यवहरन् तेषां कष्टानि सश्रद्धं श्रुतवान् । कष्टानां विवरणं प्राप्तुम् अनेकान् प्रश्नान् पृष्ट्वा उत्तराणि अपि प्राप्तवान् ।

राजभवनं प्रति गमनसमये राजा हेमशङ्करं पृष्टवान् - ''नगरस्थानां जनानां परिस्थितिः अतीव दुःखमयी । जनानां दुःखेन राजबन्धुः अपि स्वयं रोदनं कृतवान् । किन्तु भवतः किञ्चिदपि दुःखं न जातामिति तु आश्चर्यस्य विषयः'' इति ।

तदा हेमशङ्करः राज्ञः कथनेन आश्चर्यं प्राप्नुवन् उक्तवान् - ''प्रभो ! अहमपि जनानां दुःखस्य श्रवणतः नितरां दुःखितः एव । किन्तु अहं दुःखस्य निग्रहणं कृतवान् । वयं शासकाः सन्तः कदापि जनतायाः पुरतः अनाथाः इव रोदनं न कुर्याम । यदि वयं रोदनं कुर्याम तर्हि अस्माकं विषये जनाः अनादरं प्रकटयन्ति । जनैः सह वार्तालापतः मया ज्ञातं यत् अत्रत्या शासनपद्धतिः असमीचीना जाता अस्ति इति । अस्य कारणम् अधिकारिणः एव । एतत् सर्वं भवता अपि श्रुतमेव । अस्य परिहारः कः इति इदानीमस्माभिः चिन्तनीयम्'' इति ।

हेमशङ्करस्य उत्तरं श्रुत्वा राजा इतिकर्तव्यताम् सम्यक् अवगतवान् । सः तद्दिने एव हेमशङ्करं नगरपालकस्थाने नियोज्य राजबन्धुं स्वसमीपे स्थापितवान् ।





# भल्लूकमान्त्रिकः

## १४

*[भल्लूकमान्त्रिकः कालीवर्मा च मायामर्कटम् अनुसरन्तौ दुर्गस्य समीपम् आगतवन्तौ । वधकभल्लूकः दुर्गस्य अन्तः यत् प्रचलति तत् तौ श्रावितवान् । राज्ञः जितकेतोः मन्त्री जीवगुप्तः एकं सैनिकं कालीवर्मणः समीपं प्रेषितवान् । एतदभ्यन्तरे नागमल्लः तदनुचरौ च दुर्गद्वारे अग्निं योजितवन्तः । तदनन्तरम् .... ]*

दुर्गद्वारं भस्मसात् जातम् । एतत् दृष्ट्वा वधकभल्लूकः धावन् गत्वा कर्तितशुण्डं गजम् आरुह्य तत्र आगत्य कालीवर्माणम् अवदत् - ''कालीवर्ममहोदय ! इदानीं वयं दुर्गं प्रविशाम । मायामर्कटः तत्र अस्माभिः अवश्यं ग्रहीतुं शक्यः'' इति ।

ततः सः भिल्लयुवकम् आहूय अवदत् - ''अये ! वन्यसेवक ! शीघ्रम् अत्र आगच्छतु । एतं गजं दुर्गस्य अन्तः नयतु च'' इति ।

एतत् वचनं श्रुत्वा भिल्लतरुणः अग्नियुक्तं दण्डं दूरे क्षिप्त्वा स्वस्थानात् एव उच्चस्वरेण अवदत् - ''भल्लूकवर्य ! एषोऽहम् आगतः'' इति ।

दुर्गद्वारसमीपे नागमल्लः तदनुचरौ च अवशिष्टाः । नागमल्लः अवदत् - ''अत्र मम मदनुचरयोः च इदानीं किं वा कार्यम् ? न किमपि । अतः अहम् अनुचराभ्यां सह अरण्यं प्रतिगत्य मम पूर्वतनीं वृत्तिम् एव अनुवर्तयिष्यामि'' इति ।

एतत् श्रुतवान् कालीवर्मा क्रोधेन अवदत्



– ''अये लुण्ठाकवृत्ते ! भवान् मार्गे गच्छताम् असहायानां लुण्ठनमात्रं जानाति । शत्रूणां सम्मुखीकरणाय यत् धैर्यम् आवश्यकं तत् भवति न दृश्यते'' इति ।

तदा नागमल्लः तत्र स्थितान् सर्वान् सकृत् दृष्ट्वा अवदत् – ''अहं जन्मना लुण्ठाकः अस्मि । धनवतां लुण्ठनं कृत्वा उदरं पूरयामि अहम् । दुर्गस्य अन्तः स्थितः दुर्मुखः जयतु, सामन्तभूपतिः वा, किं तेन मम ? उभयोः अपि जयः पराजयः वा मम दृष्ट्या समानः एव'' इति ।

अधिकधनस्य प्राप्त्यर्थम् एव एषः इदानीं स्वस्य निर्णयं परिवर्तयन् अस्ति इति भल्लूक-मान्त्रिकः अवगतवान् । सः स्वस्य खड्गाग्रेण नागमल्लस्य स्कन्धं स्पृशन् अवदत् – ''अये नागमल्ल ! मम एतस्मिन् खड्गे मन्त्रशक्तिः नास्ति । यदि सा स्यात् तर्हि भवान् एतावता शृगालतां प्राप्तवान् अभविष्यत् । दुर्मुखात् अन्यः यदि राजा भवेत् तर्हि सः वन्यपशून् इव भवतः सर्वान् निर्दयं मारयेत् । किम् एतत् न चिन्तितं भवता ? एतादृशेषु अवसरेषु विवेकिना बुद्धेः उपयोगः करणीयः मित्र !'' इति ।

एतत् श्रुतवतः नागमल्लस्य मनसि भावना आगता यत् दुर्मुखस्य पक्षस्य आश्रयणम् एव इदानीं वरम् इति ।

अतः सः स्वस्य अनुचरौ उक्तवान् – ''इतः परम् अरण्ये भ्रमणस्य कष्टं न भविष्यति अस्माकम् । यदि वयं दुर्मुखस्य पक्षम् आश्रित्य शत्रुसंहारे साहाय्यं कुर्याम तर्हि दुर्मुखः विजयं प्राप्य सैन्ये अस्मभ्यम् उद्योगं दद्यात्'' इति ।

नायकस्य मुखात् एतत् श्रुत्वा उभौ अपि तदीयौ अनुचरौ खड्गम् उन्नीय उच्चस्वरेण उक्तवन्तौ – ''महाराजः दुर्मुखः जयतात्'' इति ।

भल्लूकमान्त्रिकः कालीवर्मा च स्वस्य वाहनम् आरोहन्तौ वधकभल्लूकम् उक्तवन्तौ – ''वयं दश अपि न स्मः । दुर्गस्य अन्तः शत्रवः बहवः स्युः अपि । तथापि न कापि चिन्ता करणीया । सर्वैः धैर्येण युद्धं कृतं चेत् जयः अस्माकम् एव भविष्यति निश्चयेन । मायामर्कटतः मन्त्रदण्डस्य स्वायत्तीकरणम् अस्माकं प्रथमं कार्यम् । तदनन्तरं राज्ञः दुर्मुखस्य प्राणानां रक्षणाय अपि प्रयासः करणीयः । एतस्मिन् कर्मणि अस्माभिः सर्वैः स्वस्य साहसप्रवृत्तिः कौशलं च विशेषतः प्रदर्शनीयम्'' इति ।

तदा नागमल्लस्य अनुचरौ स्वस्य आयुधम्

उन्नीय उच्चस्वरेण उक्तवन्तौ - ''कालीवर्मा जयतात्'' इति ।

कालीवर्मा अश्वम् आरुह्य दुर्गद्वारदिशि गच्छन् किमपि स्मृत्वा अश्वं स्थगयित्वा पार्श्वस्थान् अपृच्छत् - ''राक्षसः उग्रदण्डः क्व ?'' इति ।

तस्मिन् समये उग्रदण्डः गजस्य शुण्डां गृहीत्वा जितकेतोः मन्त्रिणः जीवगुप्तस्य दिशि गच्छन् आसीत् ।

एतत् दृष्ट्वा कालीवर्मा आश्चर्यम् अनुभवन् भल्लूकमान्त्रिकम् अवदत् - ''गुरुवर्य ! उग्रदण्डः जितकेतोः पक्षम् आश्रयितुं गच्छन् अस्ति इति भाति'' इति ।

''एवं कदापि भवितुं न अर्हति । सः मत्तः किमपि अपेक्षते इति मया श्रुतम् । अतः भवान् तत्समीपं गत्वा वस्तुस्थितिं ज्ञात्वा आगच्छतु'' इति भल्लूकमान्त्रिकः कालीवर्माणम् अवदत् ।

एतत् श्रुत्वा वधकभल्लूकः राज्ञः दुर्मुखस्य अङ्गरक्षकम् अवदत् - ''सः राक्षसः कदाचित् कालीवर्माणं वञ्चयेत् अपि । अतः वयम् अन्यं गजम् आरुह्य कालीवर्मणः रक्षणाय गच्छाम'' इति ।

ततः सः भिल्लतरुणम् आदिशत् - ''भवान् एतं गजम् आरुह्य कालीवर्मणः अश्वस्य अनुसरणं करोतु'' इति ।

अश्वम् आरुह्य आगच्छन्तं कालीवर्माणं, गजम् आरुह्य आगच्छतः वधकभल्लूकादीन् च दृष्ट्वा राक्षसः उग्रदण्डः क्षणकालम् आश्चर्येण स्तब्धः । स्वस्य शिलागदां स्कन्धे स्थापयित्वा गजस्य शुण्डाम् आकृष्य तदीयं



गमनं स्थगितवान् सः ।

कालीवर्मा उग्रदण्डसमीपं गत्वा अपृच्छत् - ''उग्रदण्डवर्य ! किम् एतत् ? अस्माभिः चिन्तितम् आसीत् यत् भवान् अस्माभिः सह दुर्गस्य अन्तः आगत्य राज्ञः दुर्मुखस्य रक्षणाय साहाय्यं कुर्यात् इति'' इति ।

''कालीवर्मन् ! राजा दुर्मुखः इतोऽपि जीवति इति किं चिन्तयति भवान् ?'' इति अपृच्छत् उग्रदण्डः ।

''एतादृशः सन्देहः किमर्थम् उत्पन्नः भवतः मनसि ? दुर्गस्य अन्तः दुर्मुखपक्षीयाः बहवः सैनिकाः युद्धं कुर्वन्तः सन्ति इति किं भवता न ज्ञायते ? यदि दुर्मुखः न जीवेत् तर्हि सैनिकाः युद्धं स्थगयेयुः । तदा युद्धकोलाहलः अस्माभिः श्रुतः न स्यात्'' इति अवदत् कालीवर्मा ।



राक्षसः उग्रदण्डः दूरे स्थितान् जीवगुप्त-सैनिकान् पश्यन् अवदत् – ''कालीवर्मन् ! भवन्तः दुर्गद्वारसमीपे स्थित्वा एवं व्यर्थचर्चया किमर्थं कालं यापयन्ति ? एतादृशं सम्भाषणं स्थगयित्वा भवन्तः सर्वे दुर्गस्य अन्तः गच्छन्तु । मायामर्कटतः भल्लूकमान्त्रिकस्य मन्त्रदण्डं वशीकृत्य दुर्मुखस्य रक्षणम् अपि कुर्वन्तु'' इति ।

''वयं तु तत् करिष्यामः एव । किन्तु भवान् गजेन सह कुत्र गच्छन् अस्ति ?'' इति अपृच्छत् कालीवर्मा ।

उग्रदण्डः स्वस्य गदया जीवगुप्तं दर्शयन् अवदत् – ''मन्त्री जीवगुप्तः तदनुचराः च पृष्ठभागतः आगत्य भवतां नाशनं यथा न कुर्युः तथा अहं तान् अवरोद्धुम् इच्छामि'' इति ।

एतत् श्रुत्वा सन्तोषं प्राप्य कालीवर्मा वधकभल्लूकादिभिः सह दुर्गद्वारसमीपं गतवान् । गजम् आरुह्य परशुं च गृहीत्वा आगच्छन्तं वधकं, महिषम् आरुह्य आगच्छन्तं भल्लूकमान्त्रिकम्, अश्वम् आरुह्य आगच्छन्तं कालीवर्माणं, पृष्ठभागे आगच्छतः नागमल्लं, तदनुचरान् च दृष्ट्वा सूर्यभूपतेः सैनिकाः उक्तवन्तः – ''महाराज ! भल्लूकमान्त्रिकः गज-सैन्येन सह दुर्गस्य अन्तः आगच्छन् अस्ति । एतदवसरे इतः पलायनम् एव वरं स्यात्'' इति ।

कस्यचित् लघुभवनस्य पृष्ठतः स्थितः सामन्तः सूर्यभूपतिः रक्तसिक्तं खड्गम् अग्रे प्रसार्य अवदत् – ''अये सैनिकाः ! अलं भीत्या । दुर्मुखपक्षीयान् सैनिकान् सर्वान् प्रायः वयं संहृतवन्तः स्मः । एषः भल्लूकमान्त्रिकः अस्मान् किं वा कुर्यात् ? अस्मत्पक्षम् अव-लम्ब्य युद्धं कुर्वन् मायामर्कटः भल्लूक-मान्त्रिकस्य शक्तितः अपि अधिकशक्तिं वहति । अतः भेतव्यं नास्ति अस्माभिः'' इति ।

सामन्तं दूरात् एव दृष्ट्वा महता क्रोधेन अवदत् कालीवर्मा – ''अये सामन्तभूपते ! मायामर्कटस्य साहाय्येन किं जयं प्राप्तुम् इच्छति भवान् ? राजा दुर्मुखः क्व ? झटिति वदतु । अन्यथा एषः मम तीक्ष्णः खड्गः भवतः शिरः कर्तयिष्यति'' इति ।

तस्मिन् एव समये मायामर्कटः कुतश्चित् आगत्य भवनभित्तेः उपरि उपविश्य विकृत-स्वरेण कीचृकृतवान् । सर्वे तस्य दिशि दृष्टिं प्रसारितवन्तः ।

तस्य वामहस्ते मन्त्रदण्डः दृश्यते स्म ।

दक्षिणहस्तेन कर्तितस्य शिरसः केशान् गृहीत्वा तत् शिरः इतस्ततः चालयन् सः अवदत् - ''अये कालीवर्मन् ! राजा दुर्मुखः क्व इति पृष्टं खलु भवता ? अत्र पश्यतु - राज्ञः दुर्मुखस्य शिरः । यावत् भवन्तः सर्वे तस्य कलेवरम् अन्विष्येयुः तावता सामन्तस्य सूर्यभूपतेः तीक्ष्णः खड्गः भवतां सर्वेषां शिरः कर्तयिष्यति'' इति ।

महिषवाहनः भल्लूकमान्त्रिकः हस्तेन खड्गं गृहीत्वा चालयन् उच्चस्वरेण अवदत् - ''अये मर्कटरूपिन् भ्रान्तमते ! मम मन्त्रदण्डः चोरितः इत्येतावन्मात्रेण महान्तं सन्तोषं मा प्राप्नोतु । मदीयः एषः खड्गः शक्त्या मन्त्रदण्डात् अवरः सर्वथा न । किं भवतः गुरुः मिथ्यामिश्रः ब्रह्मपुत्रनदप्रदेशं परित्यज्य एतस्मिन् अरण्ये वसति ?'' इति ।

एतानि वचनानि श्रुत्वा मायामर्कटः उपहासपूर्वकं कीचूकुर्वन् अवदत् - ''अये भल्लूकमान्त्रिक ! मम गुरुः कुत्र इति किं भवान् अञ्जनबलेन ज्ञातुं न शक्नुयात् ? सः प्रायः भवतः गुरोः भल्लूकपादस्य शिरसः कर्तनाय हिमालयं गतवान् सन् हिमखण्डान् निकषवत् उपयुज्य स्वस्य खड्गं तीक्ष्णीकुर्वन् स्यात्'' इति ।

एतस्य श्रवणात् महान्तं क्रोधं प्राप्तवान् भल्लूकमान्त्रिकः - ''कालीवर्मन् ! वधकभल्लूक ! भवन्तः सर्वे अत्र रक्षणं कुर्वन्तु येन सामन्तभूपतेः सैनिकेषु कोऽपि इतः सजीवं न गच्छेत् । यदि शक्येत तर्हि वयं मायामर्कटं सूर्यभूपतिं च सजीवं ग्रहीतुं प्रयत्नं करवाम'' इति अवदत् ।



यावत् मान्त्रिकस्य मुखात् एतानि वचनानि निर्गतानि तावता वधकभल्लूकस्य गजम् आरुह्य स्थितेन भिल्लयुवकेन प्रयुक्तः कश्चन बाणः मायामर्कटस्य दक्षिणहस्ते लग्नः । तस्मात् तस्य हस्ते स्थितं शिरः अधः अपतत् । वेदनाम् असहमानः मायामर्कटः उच्चैः चीत्कृतवान् ।

शिरसः पतनस्य समनन्तरम् एव दुर्मुखस्य सैनिकौ अग्रे धावितवन्तौ । तौ तत् शिरः परीक्ष्य उक्तवन्तौ - ''एतत् दुर्मुखस्य शिरः सर्वथा न । मायामर्कटः अस्मान् वञ्चयन् अस्ति'' इति ।

वधकभल्लूकः - 'जय शिरीषभैरव !' इति सकृत् उद्घोष्य - ''अये भिल्लतरुण ! मायामर्कटं लक्ष्यीकृत्य बाणं प्रयुञ्जानेन भवता युक्तम् एव कृतम् । वयं राज्ञः दुर्मुखस्य अन्वेषणाय गच्छन्तः स्मः । अभिमुखन्

आगतान् सर्वान् अहं परशुना मारयिष्यामि । तदतिरिच्य यदि कोऽपि दृश्यते तर्हि भवान् तं मारयितुम् अर्हति'' इति उक्त्वा परशोः मूल-भागेन शिरसि प्रहृत्य गजं प्रेरितवान् अग्रे गमनाय ।

गजः घीङ्कुर्वन् अग्रे अगच्छत् । अत्रान्तरे मायामर्कटः भित्तिम् अतिक्रम्य कुत्रापि अदृश्यतां गतः ।

तदा कालीवर्मा भल्लूकमान्त्रिकम् अवदत् - ''गुरुवर्य ! अस्माभिः आदौ सामन्तः सूर्यभूपतिः तत्सैनिकाः च मारणीयाः, इतः प्रेषणीयाः वा । राजा दुर्मुखः सजीवं दुर्गे कुत्रापि अस्ति इत्यत्र अस्ति मम दृढः विश्वासः'' इति ।

कालीवर्मादीन् दृष्ट्वा सामन्तभूपतेः सैनिकाः पलायितवन्तः । तदा अत्र तत्र निलीय स्थिताः दुर्मुखसमर्थकाः सैनिकाः ततः बहिः आगत्य मान्त्रिकसमीपे स्थित्वा उक्तवन्तः - ''महाशय ! अस्माकं राजा भीत्या सभामण्डपे निलीय तिष्ठति'' इति ।

''सभामण्डपं प्रति गमनाय कः मार्गः इति भवन्तः वदन्तु । शत्रूणां निवारणं वयं सर्वे चिन्तयिष्यामः'' इति अवदत् कालीवर्मा ।

यावत् कालीवर्मा भल्लूकमान्त्रिकः च सभामण्डपसमीपं गतवन्तौ तावता गजारूढः वधकभल्लूकः अपि तीक्ष्णं परशुं गृहीत्वा तत्र उपस्थितः ।

ततः क्षणाभ्यन्तरे सभामण्डपस्थस्य सिंहासनोपेतस्य प्रकोष्ठस्य द्वारम् उद्घाटितं जातम् । सर्वे तत्र सिंहासने उपविष्टवन्तं दुर्मुखं दृष्टवन्तः ।

यावत् सर्वे आश्चर्येण स्तब्धाः आसन् तावता सिंहासनस्थः राजा दुर्मुखः हस्तम् उन्नीय अवदत् - ''हे वधकभल्लूक ! एकवारं वा पुनरपि सिंहासने उपवेष्टव्यम् इत्येषा मम इच्छा इदानीं पूर्णा जाता । इदानीं भवान् मम शिरः कर्तयित्वा गुरवे उपायनीकर्तुम् अर्हति कामम् । एतद्विषये मम आपत्तिः कापि सर्वथा नास्ति इदानीम्'' इति ।

वधकभल्लूकः महता उत्साहेन गजतः अवतीर्य परशुम् उन्नीय सभामण्डपं प्रति धावितवान् ।

*- (अनुवर्तते)*



# वेताल-कथा

## निधिरक्षकः पिशाचः

हठवान् त्रिविक्रमः पुनरपि वृक्षसमीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! लक्ष्यसिद्धये कार्यं कुर्वत्सु प्रायः भवान् एव अग्रगण्यः । किन्तु किम् एतेन कृत्येन ? निरन्तरम् असाफल्यम् एव खलु प्राप्तं भवता ? एवं स्थिते अपि प्रयत्नः न परित्यक्तव्यः इति भवन्तं कः बोधितवान् ? किं कश्चन संन्यासी तादृशं बोधनं कृतवान् ? प्राणापायम् अपि अपरिगणय्य तस्य संन्यासिनः वचनस्य पालने एतावान् आदरः किमर्थं प्रदर्श्यते ? मित्र ! संन्यासिनां व्यवहारः कदाचित् निगूढः भवति । अत्र उदाहरणरूपेण संन्यासिनः वचनम्



आपाल्य पिशाचरूपं प्राप्तवतः दयानन्दस्य कथां श्रावयामि । मार्गायासपरिहाराय तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं सुधनः नाम कश्चन वणिक् आसीत् । बहून् देशान् गत्वा प्रभूतं धनं सम्पादितवान् आसीत् सः । अन्ते तेन भाग्यपुरे वासः आरब्धः । तस्य किञ्चन धनागारम् आसीत् । पत्न्याः बन्धुं दयानन्दं तस्य धनागारस्य रक्षणे नियुक्तवान् सः ।

दयानन्दः यथा न जानीयात् तथा तदीयेषु व्यवहारेषु विशेषदृष्टिं स्थापितवान् आसीत् सुधनः । दयानन्दः एतत् सर्वथा न जानाति स्म । सः तदा तदा सुधनस्य कोषागारतः धनाभरणादीनि चोरयित्वा स्वगृहं नयति स्म ।

एतां वार्तां सुधनः कदाचित् पत्नीं सुमतिम् अवदत् । सुमतिः तस्मिन् एव दिने दयानन्दम् आनाय्य तर्जनं कर्तुम् ऐच्छत् । किन्तु पत्नीम् एतस्मात् निवारयन् सुधनः अवदत् - ''यस्मिन् अस्माभिः विश्वासः कृतः सः कृतघ्नताम् आचरन् अस्ति इति मम अपि खेदः अस्ति एव । किन्तु तस्य चौर्यतः अस्माकं विशेषहानिः न भविष्यति । सः कियत्पर्यन्तं चौर्यं कुर्यात् इति ज्ञातुम् इच्छामि अहम् । अतः तस्मिन् मम विशेषदृष्टिः भविष्यति एव'' इति ।

तदा सुमतिः अवदत् - ''सम्पत्तेः नाशः अत्र मुख्यः विषयः न स्यात् । तथापि चौर्यस्य सहनं किमर्थं करणीयम् ? सः ज्ञापनीयः, उद्योगात् च्यावनीयः वा । रक्षकस्य रक्षणात् अपि स्वयं धनागाररक्षणं वरं स्यात्'' इति ।

एतत् श्रुत्वा सुधनः हसन् अवदत् - ''समग्रस्य धनागारस्य रक्षणं न सुकरम् । तस्मात् अपि रक्षके दृष्टिस्थापनं सुकरम् । अतः तदेव क्रियते मया । तस्य चौर्यात् जायमाना हानिः अत्यल्पा एव । तथापि तदीयं कृत्यं तु निन्द्यम् । एतस्य स्मारणार्थं योग्यः समयः प्रतीक्ष्यते मया'' इति ।

दिनेषु गतेषु दयानन्देन चोरितया सम्पत्त्या घटद्वयं पूर्णं जातम् । अतः दयानन्दः तत् घटद्वयं स्वगृहस्य पृष्ठतः भूमौ निखातवान् ।

एतत् ज्ञातवान् सुधनः कदाचित् दयानन्दम् आहूय अवदत् - ''धनागारस्य रक्षणाय मया भवान् नियुक्तः आसीत् । किन्तु भवान् विश्वासघातं कुर्वन् चौर्यं कृतवान् । चोरितानि वस्तूनि घटद्वये स्थापयित्वा तत् घटद्वयं गृहस्य पृष्ठतः स्थापितं भवता । भवतः सर्वेषु अपि व्यवहारेषु मम विशेषदृष्टिः आसीत् । अतः

भवता कृतं सर्वं मया ज्ञातम् अस्ति'' इति ।

एतत् श्रुत्वा दयानन्दः नितरां भीतः । सः सुधनस्य पादौ गृहीत्वा अश्रूणि स्रावयन् अवदत् - ''श्रीमन् ! मया घोरः अपराधः कृतः अस्ति । इतः परम् एतादृशम् अहं न करिष्यामि । कृपया क्षन्तव्यः अहम्'' इति ।

''भवान् मम पत्न्याः बन्धुः अस्ति इत्यतः कृपा दर्श्यते मया । सा सम्पत्तिः अपि भवते एव अर्पयिष्यते । तदर्थं भवता स्वस्य सामर्थ्यं निरूपणीयं सप्रमाणम् । यदि तत्र भवान् असफलः स्यात् तर्हि मया भवान् भटाधीनः करिष्यते'' इति अवदत् सुधनः ।

''श्रीमन् ! भवान् दयालुः । स्वस्य योग्यतायाः निरूपणाय मया किं करणीयम् इति वदतु'' इति दैन्येन अवदत् दयानन्दः ।

तदा सुधनः अवदत् - ''मम सम्पत्तिः या भवता चोरिता ताम् अहं सप्ताहाभ्यन्तरे चोरयिष्यामि । रक्षणकार्ये नियुक्तः भवान् मम प्रयत्नं विफलीकुर्यात् । तदा एव भवतः सामर्थ्ययुक्तताम् अहम् अङ्गीकरिष्यामि'' इति ।

सुमत्या यदा एतत्सर्वं ज्ञातं तदा सा अवदत् - ''किम् एतत् सर्वम् ? किमर्थम् एवं विलक्षणः व्यवहारः क्रियते भवता ?'' इति ।

तदा सुधनः मन्दहासपूर्वकम् अवदत् - ''यदि अहं पूर्वम् एव तं स्मारितवान् स्यां तर्हि मुष्टिमितायाः सम्पत्तेः सञ्चयः अभविष्यत् मम । इदानीं तु दयानन्देन घटद्वयमिता सम्पत्तिः रक्षणीया अस्ति । विपत्तिबहुलं कार्यम् एतत् । इतः यः पाठः तेन पठ्यते सः आजीवनं तस्य स्मृतिपटले स्थास्यति'' इति ।

दयानन्दः प्रवृत्तं सर्वं पत्नीम् अवदत् ।



तदा सा उक्तवती - ''एतादृशेषु कृत्येषु भगवतः साहाय्यं नितान्तम् आवश्यकम् । अस्मद्ग्राम-सीमास्थासु पर्वतीयगुहासु कश्चन महामहिम-शाली संन्यासी निवसति इति श्रूयते । तं दृष्ट्वा साहाय्यं प्रार्थ्यताम्'' इति ।

दयानन्दः संन्यासिनं दृष्ट्वा सर्वं निवेदित-वान् । सर्वं श्रुत्वा संन्यासी अवदत् - ''अहम् अभिमन्त्रितं भस्म ददामि । तत् भस्म यत्र प्रोक्ष्यते तत्र स्थितां सम्पदं सप्ताहं यावत् कोऽपि स्वीकर्तुं नार्हति । सुधनः अपि एतत् कार्यं कर्तुं न अर्हति । वस्तुतः तु सा सम्पत् सुधनस्य एव । तां सः यथा न प्राप्नुयात् तथा कुर्वन् अस्ति भवान् । एतत् पापकरं कार्यम् । एतत् पापं भवन्तं बाधिष्यते । एवं स्थिते अपि किं भवान् एतत् कर्तुं सिद्धः ?'' इति ।

दयानन्दः पापभारस्य वहनम् अङ्गीकुर्वन्



संन्यासिना यथा उक्तं तथा कृतवान् । भस्मनः कारणतः सुधनस्य प्रयत्नः विफलः जातः । अतः सा सम्पत्तिः दयानन्दस्य एव जाता । एतस्मात् सः नितरां सन्तुष्टः । किन्तु एषः सन्तोषः दीर्घकालं न स्थितः । यतः तदनन्तर-दिने एव तस्य शरीरे महान् तापः आरब्धः । सः धावन् संन्यासिनः समीपं गत्वा सर्वं निवेदितवान् । तदा संन्यासी अवदत् – "सुधनं वञ्चयता भवता तदीया सम्पत्तिः अपहृता । तस्याः रक्षणाय मया दत्तस्य भस्मनः उपयोगः अपि कृतः । एतस्मात् यः पापसञ्चयः जातः तस्य परिणामतः भवतः शरीरे तापः उत्पन्नः । एषः तापः भवता आजीवनं सोढव्यः । यदि एतत् न शक्यते तर्हि सम्पत्तिरक्षकभूतरूपं वा प्राप्तव्यम् । तापसहनं वरम् उत पिशाचजन्म इति भवता विचिन्त्य वक्तव्यम् । एषः अंशः भवतः पत्न्या अपि न ज्ञातव्यः" इति ।

शरीरपीडां सोढुम् अशक्नुवन् दयानन्दः पिशाचजन्म अङ्गीकृतवान् । ततः सः पिशाचः जातः । स्वस्य विकृतं रूपं दृष्ट्वा खेदम् अनु-भवन् सः संन्यासिनम् अपृच्छत् – "श्रीमन् ! कियत्कालं मया एवं स्थातव्यम् ?" इति ।

"सुधनस्य धनं यावत् भवता चोरितं तावत् वेतनरूपेण सम्पादयितुं भवतः यावान् कालः आवश्यकः भवेत् तावन्ति वर्षाणि पिशाच-रूपेण भवितव्यम्" इति अवदत् संन्यासी ।

तदा दयानन्दः करौ योजयित्वा अवदत् – "एतस्य तात्पर्यं यत् मया शतं वर्षाणि पिशाच-रूपेण स्थातव्यम् इति । ततः पूर्वम् इतः मोक्षं प्राप्तुं किं कोऽपि मार्गः नास्ति ?" इति ।

"यत् प्रवृत्तं तस्य कारणं भवान् एव । अतः आत्मना कृतस्य फलं स्वयम् अनु-भोक्तव्यम् । किन्तु यदि तस्याः सम्पत्तेः रक्षणाय अन्यः पिशाचः प्राप्येत तर्हि एतस्मात् पिशाचजन्मतः भवतः मोक्षः भवेत्" इति उक्त्वा दयानन्दं ततः प्रेषितवान् संन्यासी ।

एवं दयानन्दः सुधनेन दत्तायाः सम्पत्तेः रक्षकः जातः । सः कुत्र गतः इति पत्न्या पुत्रैः वा न ज्ञातम् । ते घटद्वयस्थां सम्पदं स्वीकर्तुं प्रयासं कृतवन्तः । तदा पिशाचरूपी दयानन्दः प्रत्यक्षीभूय तेषु भीतिं जनितवान् । तस्मात् भीताः ते तं ग्रामम् एव परित्यज्य अन्यत्र गताः । सुधनः अचिन्तयत् यत् दयानन्दः पत्नीपुत्रादिभिः सह कुत्रापि गतः इति ।

कानिचन वर्षाणि गतानि । यस्मिन् दया-नन्दः वसति स्म तस्मिन् देवनाथनामकः कश्चन सकुटुम्बं वासम् आरब्धवान् । सः महा-

कृपणः । तस्य एका पुत्री, एकः पुत्रः च । व्ययभीत्या पुत्र्याः विवाहस्य निर्वर्तने उदासीनः आसीत् सः । अन्ते पत्नी एव पुत्र्याः विवाहं कथञ्चित् निर्वर्तितवती । पितुः एतं स्वभावम् असहमानः पुत्रः गृहं परित्यज्य गतः । पुत्रवियोगदुःखिता तस्य माता व्याधिग्रस्ता सती चिकित्साविरहात् दिवं गता । तथापि देवनाथः तु निश्चिन्तः एव आसीत् ।

कदाचित् प्रतिवेशिगृहे सत्यनारायण-पूजावसरे देवनाथाय आम्रफलद्वयं दत्तम् । आम्रफलं सुमधुरम् आसीत् । यदि एतस्य बीजम् अहं भूमौ आरोपयेयं तर्हि गच्छता कालेन मया प्रभूतानि आम्रफलानि प्राप्येरन् इति विचिन्त्य सः गृहस्य पृष्ठभागे खननम् आरब्धवान् । तदा तेन खन् इति कश्चन शब्दः श्रुतः । पुनरपि खननेन ताम्रघटद्वयं प्राप्तम् । यदा सः पात्रयोः उद्घाटनाय उद्युक्तः तदा ततः धूमः उत्पन्नः । धूमः एव पिशाचरूपेण परिवृत्तः । पिशाचः अवदत् - ''अये नीच ! एतयोः पात्रयोः या सम्पत्तिः अस्ति तस्याः रक्षकः अस्मि अहम् । एतस्याः कणमात्रं स्पृष्टं चेदपि अहं भवन्तं निर्दयं मारयिष्यामि'' इति ।

देवनाथः आदौ पिशाचदर्शनात् भीतः । घटयोः सम्पत्तिः अस्ति इत्यस्य श्रवणात् तस्मिन् धैर्यम् उत्पन्नम् । सः धैर्येण पिशाचम् अवदत् - ''एतत् गृहं मम । अतः अत्रत्या सम्पत्तिः अपि ममैव । माम् अवरोद्धुं नास्ति भवतः अधिकारः'' इति ।

पिशाचः किमपि न अवदत् । देवनाथः पुनरपि यदा कुद्दालम् उन्नीतवान् तदा सः तस्य हस्ततः पतितः । गर्तः अपि मृत्तिकया



पूर्णः जातः । एतत् दृष्ट्वा निराशताम् अनुभवन् देवनाथः करौ योजयित्वा अवदत् - ''अये भूतनाथ ! एतयोः सम्पद्युक्तयोः घटयोः स्वामी भवेयम् इति मम तीव्रा इच्छा । एतदर्थं किं करणीयं मया ?'' इति ।

पिशाचः देवनाथं स्वस्य कथां श्रावयित्वा - ''अत्रत्या एषा सम्पत्तिः रक्षककार्यासक्तेन पिशाचेन एव प्राप्तुं शक्यः, न अन्येन'' इति उक्त्वा संन्यासिनः विषयम् अपि उक्तवान् ।

देवनाथः तस्मिन् एव दिने संन्यासिनः समीपं गत्वा स्वस्य इच्छां निवेदितवान् । तम् महता आश्चर्येण पश्यन् संन्यासी उक्तवान् - ''वत्स! भवादृशस्य कृपणस्य इहलोके स्थित्या किम् इति मम चिन्तनम् आसीत् एतावत्पर्यन्तम् । किन्तु इदानीं स च सन्देहः अपगतः । अपराधं कृतवतः दयानन्दस्य मुक्तिविधाता पुण्यपुरुषः

भवान् । भवतः इच्छा अचिरात् एव अवश्यं पूर्णा भविष्यति'' इति ।

देवनाथः संन्यासिनं साष्टाङ्गं नमस्कृतवान् । ततः प्रत्यागत्य सः दयानन्दं प्रवृत्तं सर्वम् उक्तवान् । दयानन्दः तु मौनेन स्थितवान् आसीत् । अतः देवनाथः कुद्दालं स्वीकृत्य खननम् आरब्धवान् । ततः तेन सम्पत्तिपात्रे लब्धे । ते उद्घाटिते तेन । तयोः अन्तः रत्नाभरणादीनि आसन् । 'एषा सम्पत्तिः इदानीं मदीया' इति पौनःपुन्येन वदन् सः नृत्यं कृतवान् । नृत्यं कुर्वन् एव सः अपतत् । तस्य प्राणाः निर्गताः ।

तदनन्तरक्षणे दयानन्दः पिशाचजन्मतः मोक्षं प्राप्य सामान्यमानवरूपं प्राप्नोत् । पिशाचरूपं प्राप्तवन्तं देवनाथं सकृत् करुणया दृष्ट्वा ततः निर्गतवान् सः ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! संन्यासिनः वचने परस्परविरोधः किं न दृश्यते ? भवान् 'पुण्यपुरुषः' इति सः देवनाथं किमर्थम् उक्तवान् ? तादृशस्य मरणं कथम् अभवत् ? भवतः इच्छा पूर्णा भविष्यति इति तेन किमर्थम् उक्तम् ? किं संन्यासिनः वचनं गूढार्थयुक्तम् अस्ति ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

वेतालस्य सन्देहं निवारयितुं त्रिविक्रमः अवदत् - ''देवनाथः पुत्र्याः, पुत्रस्य, पत्न्याः च विषये यत् व्यवहृतवान् तत् नितरां निकृष्टम् आसीत् । तस्य कृपणता महती । सम्पत्तियुक्तयोः घटयोः दर्शनमात्रेण तयोः स्वाधीनीकरणेच्छा तस्मिन् उत्पन्ना । सः स्वार्थान्धः जातः । परधनं विषसमानम् इति सः न अवगतवान् । एतादृशाः स्वार्थिनः पिशाचतुल्याः एव । तदीयः लोभः एव तदीयान् प्राणान् अहरत् । कृपणता अपरिमितः स्वार्थः च तं पिशाचम् अकुरुताम् । लोभी मानवः जीवन् अपि मृतः इव इति चिन्तयन् संन्यासी निर्णीतवान् यत् भूगतसम्पत्तेः रक्षकपिशाचरूपं प्राप्तुम् अयमेव अर्हः इति । अतः एव तेन उक्तं यत् भवतः इच्छा पूर्णा भविष्यति इति । तस्य वचनम् असङ्गतं तु सर्वथा न'' इति ।

राज्ञः मौनस्य भङ्गं कर्तुं समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## गान्धिवर्यस्य मन्दिरम्

गान्धिवर्यं समग्रः देशः राष्ट्रपितृत्वेन मन्यते । किन्तु ओरिस्साप्रदेशीयाः इतोऽपि अग्रे सन्ति । ते गान्धिवर्यस्य कांस्यप्रतिमां निर्माय मन्दिरे प्रतिष्ठापितवन्तः सन्ति । प्रातः सायं च तस्मिन् मन्दिरे नीराजनं प्रचलति । प्रतिदिनं भक्ताः तत्र आगत्य राष्ट्रभक्तियुक्तानि गीतानि गायन्ति । गणतन्त्रदिने (जनवरी - २६), हुतात्मदिने (जनवरी - ३०), गान्धिजयन्तीदिने (अक्टोबर् - २) च अत्र विशेषपूजा प्रचलति । असंख्याः भक्ताः तेषु दिनेषु अत्र उपस्थिताः भवन्ति ।



## जैनगुरवः, तेषां चिह्नानि च



वर्धमानमहावीरः जैनमतस्य प्रसारकत्वेन लोके ख्यातः । किन्तु ततः बहोः कालात् पूर्वम् एव जैनमतं तु अत्र आसीत् । महावीरः अन्तिमः तीर्थङ्करः । ततः पूर्वं २३ तीर्थङ्कराः आसन् । तेषां सर्वेषाम् अपि तीर्थङ्कराणां मूर्तयः समानाः एव दृश्यन्ते । किन्तु तेषां पादमूलस्थेषु पीठेषु स्थितानि चित्राणि न समानानि । आदिनाथस्य पीठे वृषभः दृश्यते । सुमतिनाथस्य पीठे पक्षी दृश्यते । एतेषां चित्राणां दर्शनात् का मूर्तिः कस्य तीर्थङ्करस्य इति ज्ञायते । पीठस्य मध्यभागे एतानि चिह्नानि भवन्ति ।

*अन्यदेशीयकथावली (पोलेण्डीया कथा)*

# राज्ञा प्राप्ता दीर्घनासिका

प्रशताधिकवर्षेभ्यः पूर्वम् उत्तरपोलेण्ड्जनाः विविधैः वृक्षैः उपेतं कञ्चित् खातं दर्शयन्तः वदन्ति स्म - ''तत्र आसीत् पूर्वं कदाचित् व्लाडिमीरीयः अपूर्वः वृक्षः । यदि सः वृक्षः इदानीम् अभविष्यत् तर्हि अहो, कियान् आनन्दः अभविष्यत् !'' इति ।

अद्यः सः हरिन्मयः खातः एव नास्ति । कस्यचित् नगरस्य मार्गस्य निर्माणाय सः ध्वस्तीकृतः । तथापि व्लाडिमीरः, तदीयः अपूर्ववृक्षः च तद्देशीयानां लोककथासु अद्यापि जीवति ।



कश्चन सिद्धपुरुषः कदाचित् व्लाडिमीरस्य मातरम् उक्तवान् आसीत् - ''भवती कञ्चित् असाधारणं पुत्रं प्राप्स्यति । किन्तु भवत्या पुत्रस्य ऐश्वर्यम् आनन्दः वा चेतव्यः'' इति ।

बहुधा विचिन्त्य व्लाडिमीरस्य माता आनन्दोपेतं पुत्रम् एव इष्टवती । 'धनस्य सम्पादनं न महते क्लेशाय । किन्तु आनन्दः तु धनादिभिः क्रेतुं न शक्यते । अतः धनात् अपि आनन्दः एव श्रेयसे' इति अचिन्तयत् सा ।

ततः पुत्रं प्राप्य सा तस्य नाम 'व्लाडिमीरः' इति निश्चितवती । महता वात्सल्येन तं पोषितवती च । सा निर्धना आसीत् । अतः सुदूरे नगरे स्थितं विद्यालयं प्रति पुत्रं प्रेषयितुं सा न शक्तवती । अतः सा कस्यचित् चर्मकारस्य समीपं तं प्रेषितवती । बालः कानिचन दिनानि तस्य समीपे वसन् कार्यं कृतवान् । तदनन्तरं सः गृहं प्रत्यागतः । गृहम् आगतः सः अवदत् - ''अम्ब ! पादरक्षाः धनिकैः एव क्रीयन्ते, न तु निर्धनैः । यः व्यवहारः धनिकानाम् एव उपकाराय भवेत् तस्मिन् मम आसक्तिः नास्ति'' इति ।

ततः सा कस्यचित् सौचिकस्य समीपं प्रेषितवती तम् । कानिचन दिनानि तत्र कार्यं

कृत्वा सः पुनरपि गृहं प्रत्यागत्य मातरम् अवदत् - ''अम्ब ! धनिकाः एव तत्र वस्त्रसीवनाय आगच्छन्ति । अहं तेषां सेवां कर्तुं न इच्छामि'' इति ।

ततः माता तं खड्गनिर्मातुः समीपं प्रेषितवती । तद्देशस्य शत्रुदेशस्य च युद्धं तदा तदा प्रचलति स्म इत्यतः खड्ग-निर्मातारः प्रभूतं धनं सम्पादयन्ति स्म । किन्तु व्लाडिमीरः एतस्य स्वामिनः समीपे अपि सप्ताहमात्रम् एव स्थित्वा प्रत्यागतः ।



''यत् साधनं जनानां संहाराय भवेत् तस्य निर्माणे श्रमं कर्तुं सर्वथा न इच्छामि एव अहम्'' इति विषादेन अवदत् सः ।

''या या वृत्तिः मया दर्शिता सा भवते न अरोचत । या भवते रोचेत तादृशी वृत्तिः का इति अहं न जानामि । भवान् अजधेन्वादीनां चारणं करोतु । अन्ये गोपालकाः इव भवान् अपि ताः प्रतिदिनं प्रातः शाद्वलं नीत्वा सायं प्रत्यानयतु'' इति अवदत् माता ।

व्लाडिमीरः मातुः एतं प्रस्तावम् अङ्गी-कृतवान् । सः अजादिभिः सह शाद्वलं गत्वा हरिन्मये परिसरे विहरति स्म । अन्यैः अज-पालकैः सह गायन् क्रीडति स्म । कदाचित् मध्याह्नकाले सः काञ्चित् शिलां परितः अग्निम् अपश्यत् । शिलायाः उपरि काचित् गोधिका दृष्टा तेन । सा अग्नितः आत्मनः रक्षणाय प्रयतते स्म । किन्तु परितः अग्निः अस्ति इत्यतः सा असहाया आसीत् । व्लाडिमीरः दण्डस्य साहाय्येन तां गोधिकाम् अरक्षत् । निरपायस्थलम् आगता गोधिका वृद्धारूपं प्राप्य तस्मै धन्यवादान् समर्पयन्ती अवदत् - ''मया किञ्चन सस्यं दीयते । एतत् भवान् स्वगृहोद्याने आरोपयतु । वृक्षत्वं प्राप्य एतत् फलानि दास्यति । तानि फलानि रोग-निवारणरूपम् अपूर्वं सामर्थ्यं वक्ष्यन्ति'' इति । ततः सा सस्यमेकं तस्मै दत्त्वा गोधिका-रूपं प्राप्य गुल्ममध्ये अदृश्यतां गता ।

व्लाडिमीरः तत् सस्यं गृहपरिसरे आरोपितवान् । गच्छता कालेन तत् वृक्षत्वम् आप्नोत् । वृक्षः फलितः अपि । व्लाडिमीरस्य माता ज्वरग्रस्ता आसीत् । वृक्षतः एकं फलं निष्कास्य मात्रे दत्तवान् सः । तस्मात् सा ज्वरात् मुक्ता जाता । ततः आरभ्य व्लाडिमीरः तस्य वृक्षस्य फलस्य दानेन जनानां रोगस्य निवारणम् आरब्धवान् । बहवः एतेन रोग-



विमुक्ताः जाताः । तस्य देशस्य राज्ञा अपि एषा वार्ता ज्ञाता । ''सः अस्माकम् आस्थाने अन्यतमः भवतु'' इति अवदत् राजा । ''किमर्थं सः पुरस्करणीयः अस्माभिः ? तं वृक्षम् आनीय राजोद्याने आरोपयाम । तस्मात् अस्मदभीष्टं सिद्धं भविष्यति'' इति अवदत् राजवैद्यः । तस्य जामाता एव तस्य देशस्य मन्त्री । सः एतं प्रस्तावम् अनुमोदितवान् ।

राजा भटान् आज्ञापितवान् यत् व्लाडिमीरस्य गृहं गत्वा तं किमपि अनुक्त्वा तत् सस्यम् आनीय राजोद्याने आरोपयन्तु इति । भटाः तथैव कृतवन्तः । किन्तु आश्चर्यं नाम वृक्षेण फलोत्पादनं स्थगितम् आसीत् । एतस्मात् राजवैद्यः मन्त्री च सङ्कटे पतितौ । राजा सक्रोधं तौ आज्ञापितवान् यत् एतद्विषये किमपि क्रियताम् इति । राज्ञः आशा आसीत् यत् एतस्य वृक्षस्य फलं मम व्याधिं निवारयेत् इति । यतः सर्वविधा अपि चिकित्सा राज्ञः व्याधिं निवारयितुम् असमर्था आसीत् ।

राजभटैः वृक्षः नीतः यत् तस्मात् व्लाडिमीरः तु नितरां खिन्नः आसीत् । आगतानाम् उपकारं कर्तुं न अर्हति स्म सः इदानीम् । अतः सः खेदेन शाद्वलं गत्वा पूर्वं यस्याः शिलायाः पार्श्वे गोधिका-वृद्धा दृष्टा तस्याः पार्श्वे उपविश्य प्रार्थितवान् - ''करुणामयि अम्ब ! किं पुनरपि भवती मम पुरतः प्रत्यक्षा भवेत् ?'' इति । अल्पे एव काले तत्र चक्रवातः कश्चन उत्पन्नः । तन्मध्ये गोधिकावृद्धा दृष्टिगोचरतां गता । व्लाडिमीरः राज्ञा तत्पक्षीयैः च कृतम् अनुचितं व्यवहारं तां विस्तरेण निवेदितवान् । तदा सा वृद्धा कण्डोलमितानि फलानि तस्मै दत्त्वा अवदत् - ''एतानि स्वीकृत्य प्रासादसमीपं गत्वा एतेषां विक्रयणं करोतु । अग्रे यत् प्रवर्तिष्यते तत् भवता स्वयं ज्ञास्यते'' इति । तदनन्तरक्षणे पुनरपि चक्रवातः उत्पन्नः । वृद्धा तन्मध्ये अदृश्यतां गता ।

व्लाडिमीरः प्रासादसमीपं गत्वा उच्चस्वरेण अघोषयत् - ''किं कोऽपि एतानि क्रेतुम् अर्हेत् ? एतानि अनिरीक्षितं परिणामं दातुम् अर्हन्ति । सः परिणामः कः इति मया अपि न ज्ञायते'' इति । राजभटाः तम् आस्थानं प्रति

नीतवन्तः । राजा अपृच्छत् - ''किम् एतानि मम पीनसं शमयेयुः ?'' इति ।

''प्रायः तथा । कदाचित् तदतिरिच्यापि किमपि कुर्युः'' इति अवदत् व्लाडिमीरः ।

राजा अन्ये आस्थानिकाः च कण्डोलात् एकैकं फलं स्वीकृतवन्तः, आनन्देन खादितवन्तः च । खादनसमनन्तरम् एव राज्ञः नासिका बकस्य चञ्चूः इव दीर्घा जाता ।

महत् आश्चर्यं प्राप्तवान् राजा क्रोधेन अवदत् - ''किम् एतत् प्रवृत्तम् ?'' इति ।

''महाराज ! पीनसः उपशान्तः उत न इति आदौ वदतु'' इति अवदत् व्लाडिमीरः ।

''पीनसस्य कथा दूरे तिष्ठतु । मम नासिका एवं कथं दीर्घा जाता ?'' इति पुनरपि क्रोधेन अपृच्छत् राजा ।

तावता ''किमेतत् ? किमेतत् !'' इति सर्वेषाम् आस्थानिकानां मुखात् उद्गारः निर्गतः । ये ये फलं खादितवन्तः आसन् तेषां सर्वेषाम् अपि नासिका बकस्य चञ्चूः इव दीर्घा जाता आसीत् ।

''महाराज ! भवान्, भवदास्थानिकाः च दीर्घया नासिकया विशेषतः शोभन्ते'' इति अवदत् व्लाडिमीरः ।

''एतत् वैशिष्ट्यं न इच्छामः वयम् । पूर्वतनरूपं प्राप्तुमस्माभिः किं करणीयम् इति आदौ वदतु'' इति अवदत् राजा ।

''मम उद्यानात् यः वृक्षः चोरितः तस्य फलस्य खादनात् एव पूर्वतनी स्थितिः प्राप्तुं शक्या इति भाति मम । स च वृक्षः तदा एव फलेत् यदा च सः स्वस्थाने स्थापितः भवेत् । यावत् एतत् न क्रियते तावत् सर्वत्र अटनसमये एषा विशिष्टा नासिका वोढव्या एव भवेत् भवद्भिः'' इति अवदत् व्लाडिमीरः ।

अनन्यगतिकः राजा तस्मिन् एव क्षणे भटान् आज्ञापितवान् यत् वृक्षः स्वस्थाने स्थापनीयः इति । भटैः तथैव कृतम् । पुनः फलदानाय सप्ताहः अपेक्षितः अभवत् । सप्ताहानन्तरं व्लाडिमीरः तस्य वृक्षस्य फलानि कण्डोले स्थापयित्वा आस्थानम् आगतवान् । तेषां खादनतः आस्थानिकानां राज्ञः च नासिका पूर्वावस्थां प्राप्नोत् ।

राजवैद्यस्य मन्त्रिणः च मार्गदर्शनं धिक्कुर्वन् राजा व्लाडिमीरम् आस्थानिकेषु अन्यतमं कृतवान् । व्लाडिमीरः एतत् सहर्षम् अङ्गीकृतवान् । किन्तु तदर्थं वेतनस्य स्वीकारं निराकृतवान् । अपूर्वफलानां साहाय्येन सः जनानाम् उपकारं कुर्वन् दिनानि यापयति स्म सन्तोषेण । सः दीर्घकालं यावत् अजीवत् । तस्य मरणस्य अनन्तरं विशिष्टवृक्षे फलस्य उत्पत्तिः स्थगिता जाता ।



# वार्ताविशेषः

## अखण्डेन नृत्येन विक्रमः




देहलीस्थे जवहारलालनेहरुक्रीडाङ्गणे तरुणाः तरुण्यः च ५५ घण्टाः यावत् नृत्यं कृत्वा नूतनं जागतिकम् उल्लेखं कृतवन्तः सन्ति । इतः पूर्वं अमेरिकादेशे क्लेवल्याण्ड्प्रदेशे त्रिनिमेषाधिकाः ५२ घण्टाः यावत् निरन्तरनृत्यं कृतम् आसीत् कैश्चित् । एतादृशः जागतिकः विक्रमः द्वितीयवारं साध्यमानम् अस्ति भारतेन । १९९९ तमे वर्षे ए.टि.वि.चानेल्निमित्तं हरियाणराज्ये गुरगाँव्प्रदेशे ५० घण्टाः यावत् समूहनृत्यं प्रवृत्तम् आसीत् ।

## शुकः घातकं प्रादर्शयत्



शुकः एव घातकं न प्रादर्शयत् वस्तुतः, किन्तु घातकः स्वस्य दोषम् अङ्गीकुर्वन् शरणं गतः यत् तत्र शुकः एव प्रमुखं कारणम् आसीत् । एषा घटना तु हैदराबादनगरे तुकारामगेट्प्रदेशे प्रवृत्ता । मल्लेशः नाम कश्चित् गृहाणि वर्णैः लिम्पन् जीवति स्म । अगस्ट्मासे सप्तविंशति-वर्षीयः सः स्वस्य भविष्यस्य विषये ज्ञातुं मार्गपार्श्वे उपविष्टवतः शुकज्योतिषिकस्य समीपं गतः । सः स्वस्य प्रश्नं ज्योतिषिकम् अश्रावयत् । ज्योतिषिकः शुकस्य पुरतः तमेव प्रश्नं पुनः उच्चारितवान् । शुकः पञ्जरतः बहिः आगत्य पत्रराशितः एकं पत्रं चित्वा स्वामिने दत्त्वा पुनः पञ्जरं प्राविशत् । मल्लेशः तत् पत्रम् अपठत् । तत्र लिखितम् आसीत् - 'स्वस्य अपराधः अङ्गीक्रियताम् । अन्यथा महती विपत्तिः प्राप्येत' इति । एतत् पठित्वा मल्लेशः क्षणकालं स्तब्धः । वर्षत्रयात् पूर्वम् आत्मना कृतः हननापराधः तेन स्मृतः । सः झटिति एव समीपस्थम् आरक्षकालयं गत्वा स्वस्य अपराधं तत्रत्यम् अधिकारिणं निवेद्य शरणं गतवान् ।





# सधीयताम्

# शक्तिः

## शुभकराय उदर्काय








PETROLEUM CONSERVATION RESEARCH ASSOCIATION
www.pcra.org e-mail : pcra@pcra.org

# उपोद्घातः
# कश्चन शक्ति विषये

एतस्य जगतः अत्यन्तावश्यकवस्तुषु अन्यतमम् अस्ति शक्तिमूलम् । अस्माकं दैनन्दिनजीवनस्य अवि-भाज्यम् अङ्गम् अस्ति एतत् ।

वयं कार्यसमये शक्तेः उपयोगं कुर्मः । शक्तिः एव अस्माकं गृहाणि नगराणि च प्रकाशयति । वाहनानि, रैल्यानानि, विमानानि, राकेट्प्रभृतीनि चापि शक्त्या एव गतिं प्राप्नुवन्ति । सूर्यतः प्राप्यमाणा शक्तिः दिवाकाले अस्मभ्यं प्रकाशं ददाति । यानि वस्त्राणि वयं प्रसारयामः तानि शोषयति शक्तिः एव । सस्यसंवर्धने अपि एषा एव उपकरोति । यदा पशवः तानि सस्यानि खादन्ति तदा तत्र सञ्चिता शक्तिः तैः प्राप्यते । हिंस्रपशवः तेषां सामान्यपशूनां मांसं यदा खादन्ति तदा तैः अपि सा शक्तिः आसाद्यते ।

एवम् अस्माकं जीवनस्य सर्वे अंशाः केनचित् वा रूपेण शक्तिसम्बद्धाः एव ।

अतः शक्तेः निर्वचनं - 'कार्यसामर्थ्योत्पादकः अंशः' इति कर्तुं शक्यते ।

यदा वयम् आहारसेवनं कुर्मः तदा अस्मच्छरीरम् आहरस्थां शक्तिं कार्योपयोगिशक्तिरूपेण परिवर्तयति । यदा वयं चलामः कार्यं कुर्मः वा, तदा आहारशक्तिः 'दग्धा' भवति । चिन्तनं, पठनं, लेखनम् इत्यादीनि अपि कार्याणि एव । शारीरकश्रमोत्पादकं कार्यम् अपि अस्माभिः क्रियते क्वचित् ।

कार्यानानि, विमानानि, विद्युद्दीपाः, यन्त्रनौकाः, विविधानि यन्त्राणि चापि शक्तिं क्रियारूपेण परिवर्तयन्ति । एवं शक्त्यवलम्बनेन अनेकविधानि कार्याणि प्रवर्तन्ते । पूर्वोक्तानि तु उदाहरणभूतानि कानिचन । इदानीं प्रश्नः उदेति - एषा शक्तिः कुतः कुतः प्राप्यते इति । शक्तिमूलानि सन्ति बहूनि । तानि च -

- सस्यजन्यादिजाता शक्तिः
- भूगर्भोष्णांशसम्बन्धिनी शक्तिः
- शिलाजातम् इन्धनम् : कृष्णाङ्गार-तैलानिलादिकम्
- हैड्रोशक्तिः समुद्रशक्तिः च
- न्यूक्लियर्शक्तिः
- सौरशक्तिः
- वायुशक्तिः

एतस्यां लघुपुस्तिकायां वयम् एतेषां शक्तिमूलानां चर्चां करिष्यामः । परिसरमालिन्यं, तस्य परिणामः, जलस्य महत्त्वं, वन्यजीवसंरक्षणं, शक्ति-संरक्षणोपायाः इत्यादिषु विषयेषु अपि कटाक्षपातं करिष्यामः ।

# सस्यजन्यादिजाता शक्तिः



यानि वस्तूनि निरुपयोगीनि इति वयं क्षिपामः ततः अपि शक्तिः उत्पादयितुं शक्या । अस्मत्परिसरे पतिताः अवकराः, शुष्काः वृक्षाः, वृक्षशाखाः, अङ्गणे पतिताः वस्तुखण्डाः, सस्यानाम् अवशेषाः, वृक्ष-मूलानि, वृक्षत्वचः, काष्ठयन्त्रागारेषु प्राप्यमाणाः वृक्षचूर्णकणाः इत्यादयः सर्वे शक्तिम् उत्पादयितुम् अर्हन्ति । किम् अधिकेन, क्षिप्यमाणाः 'टैर्' पदार्थाः मलादिसङ्ग्रहाश्चापि एतदर्थम् उपयोक्तुं शक्याः । शक्त्युत्पादनाय एतेषाम् उपयोगः कृतः चेत् अवकरादिक्षेपणाय या स्थलाभावसमस्या अनुभूयते सा परिहर्तुं शक्या । एवमेव पशुभिः विसृज्यमानानाम् पुरीषादीनाम् उपयोगतः अपि बहु साधयितुं शक्यम् । यत्र गोजाति-वराह-कुक्कुटादयः समूहरूपेण निवसन्ति तत्र यः पुरीषराशिः प्राप्यते सः भूमौ स्थापयित्वा आच्छाद्यते चेत् ततः मिथेन्-अनिलः प्राप्यते । एतस्य उपयोगेन शक्तिं प्राप्य क्षेत्रादिनिर्वहणं लीलया कर्तुं शक्यम्। पूर्वोक्तम् एतत् शक्तिमूलं भूगोलस्य उष्णतावर्धकं न । सस्यानि स्वस्य वर्धनाय अङ्गाराम्लवायोः ($CO_2$) उपयोगं कुर्वन्ति इति वयं जानीमः एव । यदा सस्यजन्यवस्तुनः दाहः क्रियते तदा एषः अंशः स्फुटः भवति । यदा अङ्गाराम्लवायोः उत्पत्तिः सङ्ग्रहः च अधिक-प्रमाणेन भवति तदा भूगोलस्य औष्ण्यं वर्धते । अतः शक्ति-मूलत्वेन सस्यजन्यादीनाम् उपयोगेन सम्भाव्यं परिसरमालिन्यं निवारितं भवति । सस्यजन्यादिवस्तूनि पुनः उपयोक्तुं शक्यानि, वस्त्वन्तरत्वेन परिवर्तयितुं शक्यानि वा इत्यतः अङ्गाराम्लवायोः उत्पत्तिसम्भवः नास्ति अत्र ।

# सौरीया शक्तिः



यदा मानवजातेः उत्पत्तिः एतस्मिन् जगति जाता ततः आरभ्य प्रायः सौरशक्तेः उपयोगः जायमानः अस्ति नैरन्तर्येण । नक्षत्रेषु अतिसमीपस्थः सूर्यः एव इति वयं जानीमः । सूर्यं विना प्रायः मानवजातेः स्थितिः एव असम्भवा ।





वयं सौरशक्तेः उपयोगं प्रतिदिनं कुर्मः विविधैः प्रकारैः। वस्त्रं प्रक्षाल्य शोषयामः खलु? तदा तानि यत् शुष्काणि भवन्ति तत्र सूर्यस्य उष्णतायाः उपयोगः भवति । आहारोत्पादनाय सस्यानि सूर्यकिरणान् अवलम्बन्ते । पशवः आहाराय सस्यानि सेवन्ते । एवं परोक्षतया सूर्यः अन्यानि नक्षत्राणि एव वा अस्माकं सर्वविध-शक्तेः स्त्रोतांसि इत्यत्र न अतिशयोक्तिः ।

## सागरीया शक्तिः

जगति विशालः सागरः अस्ति । अतः गृहाणि प्रकाशयितुं यन्त्रागाराणि चालयितुं च एषः सागरः अवश्यम् अस्माकं शक्तिमूलं भवितुम् अर्हति । इदानीं जगति सागरशक्तिसङ्ग्राहकाणि केन्द्राणि विरलानि एव सन्ति । यानि सन्ति तान्यपि लघूनि एव। सागरतः शक्तिम् अधिग्रहीतुं त्रयः मार्गाः । ते च -



- वयं समुद्रस्य तरङ्गान् उपयोक्तुं शक्नुयाम ।
- समुद्रस्य उद्गत्यवगत्योः अवलम्बनं शक्यम् ।
- जलस्य औष्ण्ये यत् परिवर्तनं जायते तदपि अवलम्बितुं शक्यम् ।

## वायवी शक्तिः

शक्त्युत्पादनाय वायुः अपि उपकारकः । वायवी शक्तिः यन्त्रशक्तिरूपेण परिवर्तयितुं शक्या । नौकायां स्थितं पोतवस्त्रं नौकायाः अग्रे सञ्चाराय उपकरोति, वायुबलम् उपयुज्य । वायुशक्तेः उपयोगस्य कश्चन प्रकारः एषः । पार्श्वस्थे चित्रे यथा दर्शितं तथा वायुयन्त्रस्य उपयोगं कृत्वा कृषिकाः आ बहोः कालात् कूपादिभ्यः जलम् उद्धरन्ति स्म ।



# उत्तरं दीयताम् प्रश्नावल्याः

**यदा भवन्तः गृहे भवन्ति, अथवा विद्यालये, कार्यालये, मित्रस्य गृहे, चलनचित्रमन्दिरे वा भवन्ति तदा किं स्मरन्ति यत् शक्तेः सञ्चयः मम कर्तव्यम् इति ?**

*अधः दत्तानां प्रश्नानाम् उत्तराणि निष्कपटया दीयन्ताम्*
'आम्' 'न' *शब्दाभ्याम् ।*



- यावदावश्यकं ततोऽपि अधिकाः दीपाः प्रवर्त्यन्ते किम् ?
- अल्पकालम् अपि प्रकोष्ठपरित्यागसमये दीपाः प्रवर्तिताः एव भवन्ति किम् ?
- अल्पे स्थले प्रकाशस्य आवश्यकता अस्ति चेदपि तत्रत्याः सर्वे दीपाः प्रवर्त्यन्ते किम् ?
- हस्तक्षालनसमये दन्तधावनसमये वा नलिकातः जलं निर्गच्छत् एव भवति किम् ?
- आवश्यकतायाम् असत्याम् अपि पौनःपुन्येन स्नानं क्रियते किम् ?
- धारास्नाननलिकायाः अधः मनःसन्तोषमात्राय दीर्घकालं स्थीयते किम् ?
- आवश्यकतायाम् असत्याम् अपि उष्णजलम् उपयुज्यते किम् ?
- औष्ण्यनिरोधकावरणस्य प्रसारणं विस्मर्यते किम् ?
- यत् प्रशस्तं ततोऽपि अधिकतया न्यूनतया वा थर्मोस्टाट् सम्प्रवर्त्यते किम् ?
- यदा उपयोगः न भवति तदा अपि सङ्गणकं प्रवर्तितम् एव भवति किम् ?
- यदा न दृश्यमानं भवति तदा अपि दूरदर्शनं, यदा श्रूयमाणं न भवति तदापि आकाशवाणी च प्रवर्त्यमानाम् एव भवति किम् ?
- 'एतदर्थं मम धनस्य व्ययः तु न भवति खलु' इति चिन्तयित्वा सर्वविधशक्तिदुर्व्ययः क्रियमाणः अस्ति किम् ?
- शक्तेः अपव्ययः मम, मत्कुटुम्बस्य, जीवजगतः च हानये भवति इति विस्मृतं किम् ?








**अङ्कगणना**

'न' इत्यस्य एकस्य उत्तरस्य एकः अङ्कः । स्वयमात्मा परीक्ष्यताम् ।

१० – १२ : अङ्काः प्राप्ताः चेत् धन्यवादार्हाः भवन्तः । सर्वत्र शक्तिसञ्चयविषये अवधानवन्तः भवन्तः ।

७ – १० : अङ्काः प्राप्ताः चेत् स्मरन्तु यत् गृहे नास्मि इति कारणेन शक्तेः अपव्ययः अनुचितः इति ।

२ – ६ : अङ्काः प्राप्ताः चेत् आत्मपरिष्कारः चिन्त्यताम् । भवन्तः धनस्य शक्तेः च अपव्ययं कुर्वन्तः सन्ति, यच्च या च अन्यैः उपयोक्तुम् अर्हम् अर्हा वा ।

**शक्तिसञ्चयः न केवलम् आत्मनः कृते, अपि तु जगतः कृते ।**

# कारणानि परिसरमालिन्यस्य

**परिसरमालिन्यं समग्रस्य जगतः एव महासमस्या । कोटिशः जीविनां स्वास्थ्यविनाशकम् अस्ति तत् । क्वचित् प्राणापायकरम् अपि तत् ।**

*परिसरः अपेक्षिताय उपयोगाय यथा न भवेत् तथा रासायनिक-वस्तूनि अन्यानि वा यत् कालुष्यं जनयन्ति तदेव परिसरमालिन्यं नाम । परिसरशब्देन सः प्रदेशः अपि गृह्यते, यत्र भवद्भिः वासः क्रियते । परिसरमालिन्यस्य कानिचन प्रमुखानि कारणानि अत्र निरूपितानि सन्ति -*

**१. अरण्यसम्पत्तौ ह्रासः** - यन्त्रागाराणाम् अन्यविधभवनादीनां च निर्माणाय, नगर-निर्माणाय च जगति महता प्रमाणेन वृक्षाः कर्त्यन्ते । किन्तु तेनैव प्रमाणेन नूतनसस्यानाम् आरोपणाय प्रयासः न क्रियते । एतस्मात् अरण्यसम्पत्तौ महान् ह्रासः भवति एव सहजतया । ततः परिसरमालिन्य-प्रमाणं निरन्तरं वर्धते ।

**२. नदीकालुष्यम्** - यन्त्रागारेभ्यः यन्त्रोद्यम-प्रदेशतः वसतिप्रदेशेभ्यः च निर्गतानि मलिन-जलानि समीपस्थां नदीं प्रति गच्छन्ति । ततः नदीजलं कलुषीकृतं भवति । अभिवृद्धिशीलेषु अनभिवृद्धेषु च देशेषु वस्त्रक्षालन-स्नान-पात्रक्षालनादिभिः कार्यैः तत्रत्यैः जनैः नदीजलं बहुधा कलुषी-क्रियते ।





**३. शब्दमालिन्यम्** - यन्त्रागारेषु उपयुज्यमानानि यन्त्राणि महान्तं शब्दं जनयन्ति आदिनम् । एतस्मात् तत् परितः स्थितस्य परिसरस्य शान्ततायाः भङ्गः भवति नियतम् । शब्द-प्रसारनिवारणार्थं योग्याः संरक्षणोपायाः न आश्रीयन्ते यत् तस्मात् एतत् सम्भवति । एतस्य परिणामतः तत्परिसरवासिनः जनाः महत् मनोऽभिहननं प्राप्नुवन्ति ।

**४. वायुप्रदूषणम्** - यान्त्रिकक्षेत्रे अभिवृद्धिं गताः देशाः प्रतिवर्षं कोटिकोटिटन्मितान् वायु-प्रदूषणकरान् अंशान् उत्पादयन्ति । केषाञ्चित् उत्पत्तिः अस्माभिः अवश्यं ज्ञातुं शक्या अपि । विद्युदुत्पादनकेन्द्रे कृष्णाङ्गारस्य तैलस्य च दाहात् सल्फर् डैयाक्सैड् यत् उत्पद्यते तत् एतस्य उदाहरणम् । मार्गेषु जायमानायाः वाहनसञ्चारवृद्धेः अपि कार्बन्मोनाक्सैडादयः अपायकराः अंशाः आधिक्येन विसृष्टाः भवन्ति । ततः सर्वत्र वायोः प्रदूषणं सम्भवति ।

**५. भूमिप्रदूषणम्** - यत्र जनाः वसन्ति तादृशेषु प्रदेशेषु त्याज्य-वस्तूनि राशीक्रियन्ते यत् तस्मात् भूमिप्रदूषणं सम्भवति । यन्त्रागारादयः यत्र भवन्ति तत्रत्यायां भूमौ त्याज्यवस्तूनि अवकरादीनि च सहजतया भवन्ति एव । अतः तत्रत्यायाः भूमेः सारवत्ता गच्छता कालेन अपगच्छति । तस्मात् सा कृष्यादिकार्याय उपयोक्तुम् अनर्हा भवति ।



# दुष्परिणामाः परिसरमालिन्यस्य

नगरप्रदेशे वायुमालिन्यं प्रायः सामान्यः विषयः अस्ति । महानगरेषु प्राधान्येन वायोः मालिन्यम् उत्पादयति - सल्फर् डैयाक्सैड् ($SO_2$), ओजोन् च । एतौ अत्यन्तम् उग्रं परिणामं जनयतः । वस्तुतस्तु, वायुद्वारा जायमानस्य मालिन्यस्य विषये बहुषु महानगरेषु महती चिन्ता जायमाना अस्ति । सद्यः प्रवृत्तानि विशेषाध्ययनानि अस्मान् ज्ञापयन्ति यत् रासायनिकद्रव्येषु विद्यमानाः केचन विषांशाः एव एतस्य कारणम् इति । एते विषांशाः वायौ सम्मिलिताः सन्तः जनानाम् आयुषः न्यूनीकरणे अपि समर्थाः । वायौ स्थिताः अन्ये मालिन्यकारकाः केचन अंशाः अपि आरोग्यवैपरीत्यम् उत्पादयन्ति बहुधा । तानि रासायनिकानि वस्तूनि श्वासकोषसम्बद्धान् विविधान् रोगान्, अन्यविधान् रोगान् च मानवेषु उत्पादयन्ति ।

शब्दमालिन्यं रक्तपरिचलनवेगं वर्धयति, मनसः भारमपि । इतोऽपि अधिकाघातकरः विषयः नाम श्रवणलोपात्मकः विपरिणामः अपि इतः भवितुम् अर्हति इति । श्रवणलोपस्य प्रकार-द्वयमस्ति । विस्फोटादीनाम् अत्यन्ताघातकारिणां शब्दस्य सकृत् श्रवणात् जायमाना बधिरता एकविधा । तेन च अनुक्षणं श्रवणशक्तिलोपः जायते । मध्यमस्तरस्य शब्दस्य बहुवारं श्रवणेन अपि श्रवणशक्तिलोपः भवितुम् अर्हति । द्वितीयः प्रकारः एव उच्यते सामान्यः श्रवणलोपः इति । एषः एषु दिनेषु आधिक्येन दृश्यते सर्वत्र ।

जलमालिन्यं जलं कलुषीकरोति, पातुम् अन्यकार्यार्थं च अयोग्यं करोति च । जलतः उत्पद्यमानानां बहूनां रोगाणां कारणम् एतदेव ।

## मालिन्यं दूरीकर्तुम् उपायाः

विश्वस्तरे जनेषु मालिन्यस्य दुष्परिणामविषये ज्ञानोत्पादनं करणीयम् । तेन च मालिन्यस्य प्रमाणं न्यूनीकृतं स्यात् । एतत् ज्ञानोत्पादनं दिनपत्रिका, दूरदर्शनम्, आकाशवाणी, सङ्गोष्ठी इत्यादीनां माध्यमेन करणीयं भवति प्रायः ।

परिस्थितेः गम्भीरताम् मनसि आकलय्य अस्माभिः 'मालिन्यस्य दुष्परिणामाः' इति विषयः चर्चाविषयत्वेन स्वीकृतः अत्र । इदानीं वा जागरणं न प्राप्येत चेत् अग्रिमेषु दिनेषु जनाः महत् दुष्परिणामम् अनुभवेयुः ।



# प्रामुख्यं जलस्य



भगवतः सृष्टौ अस्माकं भूमिः एव उत्कृष्टतमा इति वक्तुं शक्यते । अत्र पादोनमितः भागः जलेन आवृतः अस्ति, येन च भूमेः ६० - ७० प्रतिशतं भागः वासयोग्यः जातः अस्ति । जलं पुनरुत्पत्तियोग्यम् । बाष्पीभवनादिद्वारा एतत् पौनःपुन्येन भूमौ प्राप्यते । अतः एव अनन्तकालपर्यन्तम् अपि एतत् लभ्यं भवति ।

एवं तर्हि चिन्ता किमर्थम् इति तु न चिन्तनीयम् । यतः प्रतिजनं यत् पानजल-परिमाणं पूर्वं प्राप्यते स्म तत्र ह्रासः जायमानः अस्ति इदानीम् । एवम् ऊह्यते यत् जनसङ्ख्यावृद्धेः कारणतः, महता प्रमाणेन जलस्तरे जायमानस्य परिवर्तनस्य कारणतः च अग्रिमेषु ५० वर्षेषु शुद्धजलस्य प्राप्तौ महान् ह्रासः भवेत् इति ।

*जलस्य सञ्चयः कथं कर्तुं शक्यः ?*
*यदि अद्य आरभ्य प्रतिदिनं लघुः प्रयत्नः क्रियेत*
*तर्हि जीवितावधौ विशेषसिद्धिः एव प्राप्तुं शक्या ।*

## जलसञ्चयाय अत्र सन्ति केचन सामान्याः उपायाः

**बिन्दुतः जायते सिन्धुः**

१. अल्पधारायुक्ताः करणीयाः धारानलिकाः, सामान्याः नलिकाः, शौचालयीयाः नलिकाः इत्यादयः । एताः तु सर्वत्र आपणेषु उपलभ्यन्ते ।

२. दन्तधावनसमये, मुखक्षौरकाले, हस्तक्षालनावसरे, पात्रक्षालनप्रसङ्गे वा व्यर्थजलनिर्गमं स्थगयन्तु । एतादृशं जलं क्वचित् सङ्गृह्णन्तु, येन उद्यानसस्यादीनां सेचनं कर्तुं शक्येत ।



३. कदाचित् 'नौकास्नानम्' अपि कुर्वन्तु । नौकासु शुद्धजलस्य प्राप्तिः अल्पप्रमाणेन भवति । अतः नाविकाः आदौ शरीरम् आर्द्रीकृत्य, जल-धारां स्थगयित्वा फेनकलेपनादिकं कृत्वा अन्ते जलधारां प्रवर्त्य स्वस्य शरीरं स्वच्छीकुर्वन्ति ।

४. नलिकातः यदा जलं बिन्दुरूपेण धारारूपेण वा स्रवति तदा योग्यस्य भागस्य योजनेन नलिकापरिवर्तनेन वा जलस्रावं स्थगयन्तु । बिन्दुरूपेण जलस्य पतनात् प्रतिदिनं १५ लीटर्-मितं जलं व्यर्थं भवति इति स्मरन्तु । शौचालयपात्रे जलस्रावस्य अभिज्ञानाय दशबिन्दुमितम् आहारीयवर्णं योजयन्तु । १५ निमेषान् प्रतीक्षताम् । ततः शौचालपात्रे वर्ण-मयता दृश्यते चेत् स्पष्टं यत् शौचालपात्रे जलस्रावः अस्ति इति ।

**जलस्य परिमितोपलभ्यतां जलस्य उपयोगप्रमाणं च मनसि आकलयामः चेत् चिन्ताजनकं चित्रमेव यद्यपि प्राप्यते, तथापि एतस्याः समस्यायाः निवारणाय भवद्भिः भवत्कुटुम्बीयैः च अवश्यं किमपि कर्तुं शक्यते एव । जलसंरक्षणोपायाः प्रतिदिनम् अनुस्रियन्ते चेत् भाविजनतायै प्रभूतम् एव जलं सञ्चेतुं शक्नुयाम वयम् ।**



# विहारयात्रा काचित्

महात्मप्राथमिकविद्यालयेन नन्दिग्रामे शक्तिसंरक्षणसङ्घः आरब्धः । तस्य चत्वारः सदस्याः सन्ति । परिसर-विज्ञानाध्यापिका निर्मलामहोदया अस्ति तस्य संयोजिका । सः सङ्घः सदा कार्यशीलः ।

ते शनिवासरे विहारयात्रार्थं गमनाय योजनां कृतवन्तः सन्ति । प्रातः उपाहारं समाप्य छात्राः अध्यापिका च विद्यालये ७-३० वादने सम्मिलिताः ।

महात्म-प्राथमिक-विद्यालयः

सुप्रभातम् आर्ये !

सुप्रभातं वत्साः !

शिक्षिकया स्वस्य कारयानम् आनीतम् अस्ति । सा यन्त्रावरणम् उद्घाट्य यन्त्रं, तैलपरिमाणं च परीक्षते । रेडियेटर्भागं जलेन पूरयति सा ।

वत्साः ! भवन्तः स्वस्य स्यूतान्, आहार-बन्धान्, अन्यानि वस्तूनि च यानस्य पृष्ठभागे स्थापयन्तु !

यानस्य चत्वारि चक्राणि अपि परीक्षते सा । पृष्ठभागस्थं वस्तुस्थापनस्थलम् उद्घाट्य समीकरणवस्तूनां स्थितिं दृढीकरोति सा । चक्रान्तरम् अस्ति किम् इति परीक्षते ।

अष्टवादने अध्यापिका छात्राः च कारयाने उपविश्य बन्धपट्टिकां धरन्ति । अध्यापिका मन्दगत्या यन्त्रं प्रवर्तयति । वामदक्षिण-प्रतीपगमनसूचकान् दीपान्, यानबाह्यं च परीक्ष्य सा यानं मन्दगत्या अग्रे नयति । बहुभिः यानचालकैः एवं न क्रियते प्रायः ।

किमर्थम् अस्माकं गतौ मन्दता? मम पिता वेगेन यानं चालयति, येन वयं सर्वे आनन्दिताः भवामः ।

यदि मन्दगत्या यानं चाल्यते तर्हि यानस्य निग्रहणं न क्लेशाय । अल्पव्ययाय भवति अपि तत् । ८० कि.मी. वेगेन यानचालनेन यावत् शिलातैलं व्ययितं स्यात् तत्र ४०% सञ्चयः भवति ५० कि.मी. वेगेन गमनेन इति तु मम अनुभवः ।

तन्नाम एवं गमनं सुरक्षिततायै धनसञ्चयाय च !
















यदा प्रयाणम् अनुवृत्तं तदा यानवेगः अपि क्रमशः प्रवृद्धः । यदा उद्दिष्टं स्थानं सम्प्राप्तं तदा अध्यापिका यानस्य वेगं न्यूनीकृत्य गतिरोधकम् अपि मन्दम् एव प्रवर्तयन्ती यानस्य निश्चलस्थितिं सम्पादितवती।















# अत्र सन्ति केचन प्रश्नाः




## ज्ञानपरीक्षणाय

**१. वयं यासां शक्तीनाम् उपयोगं कुर्मः प्रायः तासां मूलस्रोतः भवति -**

अ. सूर्यः आ. वायुः

इ. भूमिः ई. समुद्रः

२. वैद्युतीया शक्तिः निर्मातुं शक्या -

अ. यन्त्रशक्तितः आ. रासायनिकशक्तितः इ. रेडियण्ट्शक्तितः ई. सर्वैः अपि प्रकारैः

**३. गेसोलिन्प्राप्त्यर्थं शिलाजातं किम् इन्धनं परिष्क्रियते ?**

अ. नैसर्गिकः अनिलः आ. कृष्णाङ्गारः

इ. पेट्रोलियम् ई. प्रोपेन्

**४. न्यूक्लियर्शक्तिकेन्द्रे युरेनियम्-अणवः -**

अ. परस्परं सम्मिलिताः सन्तः शक्तिम् उत्पादयन्ति ।

आ. विभक्ताः सन्तः शक्तिम् उत्पादयन्ति ।

इ. दग्धा सन्तः शक्तिम् उत्पादयन्ति ।

ई. विभक्ताः सन्तः इलेक्ट्रान्-उत्पादनं कुर्वन्ति ।

**५. नैसर्गिकः अनिलः प्राधान्येन सर्वत्र नीयते -**

अ. नालमाध्यमेन आ. भारवाहकाणां द्वारा - इ. नौकाद्वारा ई. त्रिभिः अपि माध्यमैः

**६. परिसरे स्थितस्य कस्यचन वायोः वृद्धि-परिमाणम् अवलम्बते अस्माकं भूगोलस्य औष्ण्यम् । सः वायुः कः?**

अ. ओझोन् आ. सल्फर् डयाक्सैड्

इ. अङ्गाराम्लवायुः ई. न्यूट्रियस् आक्सैड्

**७. सौर-सस्यजन्यादि-वायु-जियोथर्मल्-हैड्रो-पवर्मूलाः शक्तयः नवीकरणार्हमूलीयाः इति किमर्थम् उच्यते?**

अ. ताः स्वच्छाः निर्बाधोपयोगयोग्याः च इत्यतः ।

आ. साक्षात् ताः विद्युच्छक्तिरूपेण उष्णता-रूपेण च परिवर्तन्ते इत्यतः ।

इ. अल्पेन एव कालेन निसर्गः ताः पुनः उत्पादयति इत्यतः ।

ई. वायुप्रदूषणं न कुर्वन्ति इत्यतः ।

**८. विद्युच्छक्तिः केषां चलनतः उत्पद्यते?**

अ. अणूनां चलनतः

आ. मोलोक्यूलस्चलनतः

इ. एलेक्ट्रान्चलनतः ई. न्यूट्रान्चलनतः

**९. कृष्णाङ्गारस्य दाहतः दैनन्दिनोपयोगिनी विद्युच्छक्तिः कियता प्रमाणेन प्राप्यते ?**

अ. १/३ आ. १/२

इ. ३/४ ई. ९/१०

**उत्तराणि -**

१. अ. सस्यजन्यादि-वायु-सूर्यमूलानां शक्तीनां, शिलाजन्यानाम् इन्धनशक्तीनां च मूलस्रोतः सूर्यः ।

२. ई. वैद्युतीया शक्तिः त्रिभिः अपि प्रकारैः उत्पादयितुं शक्या ।

३. इ. पेट्रोलियम् ।

४. आ. युरेनियम्-अणवः विभक्ताः सन्तः शक्तिम् उत्पादयन्ति ।

५. अ. नैसर्गिकानिलः प्राधान्येन नालमाध्यमेन सर्वत्र नीयते ।

६. इ. कार्बन्डयाक्सैड्वृद्धिपरिमाणम् अवलम्बते भूगोलस्य औष्ण्यम् ।

७. इ. अल्पेन एव कालेन तानि शक्तिमूलानि पुनः उत्पादयितुम् अर्हति निसर्गः ।

८. इ. एलेक्ट्रान्स्चलनतः वैद्युती शक्तिः उत्पद्यते ।

९. अ. ३३% प्रमाणेन विद्युच्छक्तिः प्राप्तुं शक्या ।



# केचन बिन्दवः तैलसञ्चयविषये

अधः दत्तानां केषाञ्चन बिन्दूनाम् अनुसरणतः भवन्तः इन्धनतैलस्य सञ्चयं कर्तुम् अर्हन्ति, वायुप्रदूषणम् अपि निवारयितुम् अर्हन्ति । कः, कौ, के, अंशाः अनुस्त्रियन्ते इति तु भवदिच्छाम् अवलम्बते। 'किन्तु' एतावत् तु सत्यं यत् यस्यकस्यचिदपि बिन्दोः अनुसरणतः इन्धनतैलनिमित्तं क्रियमाणे व्यये न्यूनता भविष्यति इति ।

## यानचालनम्

- अधिकवेगेन यानचालनं मास्तु । वेगवर्धनाय अधिकाश्वशक्तियुक्तं यन्त्रं (यस्य च निमित्तम् अधिकम् इन्धनतैलम् आवश्यकम्) कार्यानेषु योजितं भवति । सामान्यवेगस्य अनुसरणाय अल्पा अश्वशक्तिः पर्याप्ता भवति ।
- हठात् गतिरोधकस्य उपयोगं, हठात् स्थगनं च निवारयन्तु । यातायातदीपस्य, स्थगनसंज्ञायाः च विषये अवधानं भवतु । पार्श्वगमनदीपानाम् उपयोगः भवतु । यानानां यातायातं सरलतया यदि भवति तर्हि सर्वेषाम् अपि तैलोपयोगे सञ्चयः भवति ।
- यानचालनारम्भसमये यन्त्रस्य चालनम् अकृत्वैव अपेक्षित 'गेर्' प्राप्ति सम्पादयन्तु ।
- मन्दगत्या यानं चाल्यताम् । किञ्चन सर्वेक्षणं ज्ञापयति यत् यदा वाहनस्य वेगः ५५-७५ कि.मी.मितः प्रतिघण्टं भवति तदा इन्धनतैलस्य उपयोगे २०% वृद्धिः भविष्यति इति ।
- यदा 'गेर्'परिवर्तनं करणीयं तदा एव 'क्लच्'-उपयोगः भवतु । यानचालनसमये 'क्लच्'-उपयोगतः शक्तिव्ययः भवति, क्लच्साधने महति क्षतिः अपि भविष्यति ।
- निमेषात् अधिकं कालं कदाचित् यदि स्थातव्यं भवति तर्हि यानस्य यन्त्रं स्थगयन्तु । व्यर्थतया यन्त्रं प्रवर्त्य मा तिष्ठन्तु।

## इन्धनतैलं याननिर्वहणं च

● वायुशोधकम् इन्धनतैलशोधकं च काले काले परिवर्तयन्तु 'वाहननिर्वहणपुस्तिकायाः' सूचनायाः अनुगुणम् । यदि धूलिमये परिसरे यानं चाल्यते तर्हि वायुशोधकं पौनःपुन्येन परिवर्तयन्तु । ● यन्त्रं सदा सुस्थितौ एव भवतु । ● अपेक्षायाम् असत्याम् 'अग्रेसिव्रैस्'उपयोगः मास्तु । ● चक्रेषु वायुः योग्यप्रमाणेन भवतु । यन्त्रचक्राणि तैललिप्तानि भवन्तु । ● यदि गेसोलिन्-जनितशक्तेः उपयोगः क्रियमाणः अस्ति तर्हि आधिक्येन एकस्य इन्धनकोषस्य स्थापनं, पर्यायेन्धनप्राप्तिव्यवस्थाकल्पनं वा वरम् ।



# उपायाः तर्काः च



# शक्ति सञ्चयाय

शक्तिसंरक्षणाय सन्ति अनेके उपायाः । तेषु केचन यथा -

१. विद्युच्छक्तिः, गेसोलिन् इत्यादीनां शक्तीनां प्राप्तये यः व्ययः क्रियते तत्र न्यूनता सम्पादनीया ।

२. शिलाजन्येन्धनानां (तैलम्, अनिलः, कृष्णाङ्गारः इ०) उपयोगस्य न्यूनीकरणात् सञ्चयः कर्तुं शक्यः ।

३. शक्तेः उपयोगस्य समये केचन अन्ये दुष्परिणामाः अपि भवन्ति । यथा - परिसरमालिन्यम्, वन्यपरिसरस्य नाशः, भू-नाशः इत्यादयः । ते निवारणीयाः अवश्यम् ।

४. यद्यपि शक्तेः उपयोगाय धनं स्वयं न दीयेत, तथापि शक्तेः व्यर्थता तु अवश्यम् अवरोद्धव्या ।

केचन स्वगृहे शक्तेः उपयोगविषये विशेषावधानवन्तः भवन्ति, किन्तु अन्यत्र तदेव अवधानं दीयमानं न दृश्यते । शक्ति-सञ्चयविषये दिनस्य २४ घण्टाः अपि अवधानं स्यात् । कार्यस्थाने शक्तेः सञ्चयं कर्तुम् अत्र सन्ति केचन उपायाः ।

## दीपीयोगः

शक्तिसञ्चयाय सरलः प्रमुखः च उपायः नाम अनावश्यकानां दीपानां निर्वापणम् ।



- उपयोगरहितान् दीपान् अवश्यं निर्वापयन्तु ।
- अल्पवोल्टेज्युक्तानां दीपानाम् उपयोगं कुर्वन्तु ।
- यत्र शक्यं तत्र सूर्यप्रकाशस्य उपयोगः चिन्त्यताम् ।
- विद्युद्दीपादयः सर्वदा स्वच्छाः भवन्तु ।
- 'फोकस्'दीपस्य उपयोगः भवतु ।
- यत्र शक्यं तत्र फ्लोरेसेण्ट्दीपानां सि.ए.एल्.-दीपानां च उपयोगः भवतु ।

### भवन्तः जानन्ति किम् ?

**एकस्मिन् वर्षे वयं यावत्याः विद्युच्छक्तेः उपयोगं कुर्मः ततोऽपि १०,००० गुणितां शक्तिं सूर्यः अस्मभ्यं ददाति ।**

वासभवने ये निर्वहणस्य विद्युतः च व्यवस्थां पश्यन्ति तान् भवन्तः वदन्तु यत् फ्लोरेसेण्ट्दीपानाम् एव आधिक्येन उपयोगः भवतु इति । रात्रौ, विरामदिनेषु च कार्यं यदा न प्रचलति तदा दीपाः निर्वापिताः भवन्तु इत्यपि तान् सूचयन्तु ।





# रक्ष्यतां वन्यजीवनम्

नाशदशायां स्थितायाः जीवजातेः, परिसरस्य च नाशस्य अवरोधाय भवन्तः अवश्यं किमपि कर्तुम् अर्हन्ति । किञ्चित् शिक्षणं प्राप्य सङ्कल्पशक्त्या व्यवह्रियते चेत् काचित् सिद्धिः प्राप्ता भवेत् एव । कथं वन्यजीवनस्य हानिः निवारयितुं शक्या इत्येतत् ज्ञातुम् अधस्तनं पठ्यताम् । स्वस्य परिसरः उपकारी क्रियताम् ।

## रक्षणं कल्प्यताम्

सस्यानां वन्यजीविनां च जीवनं परस्परसम्बद्धम् । वन्यजीविनः वने अरण्ये वा स्वस्य वासं कल्पयन्ति । पक्षिणः वृक्षेषु नीडं रचयन्ति । पतङ्गादयः वन्यपुष्पेभ्यः आहारं प्राप्नुवन्ति । गुल्माः, मृद्व्यः भूमयः, जलयुक्ताः प्रदेशाः च बहुविधानां तिर्यग्जन्तूनाम् आश्रयभूमिः । यदा मानवः अरण्यस्य वनादीनां च अतिक्रमणं कर्तुम् आरब्धवान्, पशून् पक्षिणः च मारयितुम् उद्युक्तः जातः, वृक्षाणां कर्तनं यदा नैरन्तर्येण कृतवान्, तदा वन्यपरिसरस्य हानिः महती जाता । गच्छता कालेन जीवजातेः विनाशः अपि आरब्धः ।

- कमपि जीविनं न मारयन्तु । सर्वविधजीविनां जीवनाय अवकाशं कल्पयन्तु ।
- राष्ट्रियोद्यानाभयारण्यजन्तुशालादिषु तेषां वासव्यवस्थां कल्पयन्तु ।
- मानववसतिषु पक्षिप्रभृतिभ्यः नीडान् रचयन्तु ।

## स्वस्य परिसरम् उपकारिणं कुर्वन्तु

यदि गृहपरिसरः स्वच्छीकर्तुम् इष्यते, उद्यानं निर्मातुम् अन्यविधकार्याय उपयोक्तुं वा यदि इष्यते तर्हि गुल्मपङ्क्तिं रक्षयन्तु अवश्यम्, प्राचीनवृक्षान् मा कर्तयन्तु च । तेन जीविनां जीवनं क्षतिग्रस्तं न भवेत् ।

यदा भवन्तः गृहोद्याने विदेशीयान् वृक्षादीन् आरोपयन्ति तदा ते स्थानीयानां दूर्वा-पुष्प-गुल्म-वृक्षादीनां निर्गमनस्य कारणानि भवन्ति । यदा स्थानीयाः वृक्षगुल्मादयः न भवन्ति तदा तिर्यग्जन्तुजातिः विनष्टा भवति । एषा तिर्यग्जन्तुजातिः एव पक्षिप्रभृतीनाम् आहारः । आहाराभावात् आश्रयाभावात् च पक्षिप्रभृतयः तत् स्थलं परित्यजन्ति । येषां पक्षिणः एव आहारः ते अपि तत् स्थलं परित्यजन्ति ।

पक्षिणः, पतङ्गान्, तिर्यग्जन्तून्, अन्यत्र प्राप्तपीडान् अन्यान् जीविनः च आकर्षन्ति स्थानीयसस्यानि । अतः विदेशीय-सस्यानां स्थाने स्थानीयसस्यानि यदि भवन्तः आरोपयन्ति तर्हि जीवजगतः उपकारः कृतः भवति । यदि अवकरादीन् भूमौ निखाय गोभरनिर्माणं क्रियते तर्हि अवकरक्षेपणसमस्या परिहृता भवति, सस्यानि गोभरं प्राप्नुवन्ति च । ये स्थानीयजीविनां हानिं कल्पयेयुः तेषां रासायनिकगोभराणाम् उपयोगः अपि निवारितः भवति ।



# बिन्दवः योज्यन्ताम्

१ तः ३३ पर्यन्तं स्थितान् बिन्दून् रेखया योजयित्वा चित्रे किम् अस्ति इति जानन्तु ।



# अभिज्ञायन्ताम् भेदांशाः

एते चित्रे यद्यपि अभिन्ने इव भासेते तथापि एतयोः भेदांशाः सन्ति केचन ।
ते के इति अभिज्ञायन्ताम् ।

# Listen, Enjoy & Learn

about the benefits of

**Oil Conservation & Environment Protection**

## "Boond Boond Ki Baat"



**Every Monday at 9.00 AM on FM Gold.**

The programme is telecast from 47 other stations in Hindi and regional languages



PETROLEUM CONSERVATION RESEARCH ASSOCIATION
E-mail : pcra@pcra.org
Visit us at : www.pcra.org

# Learn conservation with fun




## Every Sunday on DD-1 at 11.00 AM

(Repeat telecast on Wednesday at 9.00 AM)

*Watch the programme & know all about :*

- Oil Conservation
- Wildlife Preservation
- Significance of Water
- Environment Protection etc.



PETROLEUM CONSERVATION RESEARCH ASSOCIATION
E-mail : pcra@pcra.org
Visit us at : www.pcra.org




**Petroleum Conservation Research Association**
"Sanrakshan Bhavan",10, Bhikaiji Cama Place, New Delhi-110 066
Phone : 26198856 Fax : 26109668
**Northern Region :**
Chief Regional Co-ordinator, "Sanrakshan Bhavan", 10, Bhikaiji Cama Place,
New Delhi-100 066. Phone : 26198753, 26182161 Fax : 26109668
**Eastern Region :**
Chief Regional Co-ordinator, Everest House (2nd Floor), 46-C, Chowringhee Road,
Kolkata-700 071. Phone : 22887250 / 22881913 Fax : 22880763
**Western Region :**
Chief Regional Co-ordinator, C-5, Keshva Building (Ground Floor),Bandra-Kurla Complex,
Bandra East, Mumbai-400 051. Phone : 26592587 / 26592181 Fax : 26590034
**Southern Region :**
Chief Regional Co-ordinator, TMB Mansion (1st Floor),739, Anna Salai,
Chennai-600 002. Phone : 28521662 / 28520417 Fax : 28521662



# महिमान्वितः दर्पणः

शङ्करः षोडशवर्षीयः तरुणः । तृतीये वयसि एव सः मातृवियोगं प्राप्तवान् आसीत् । अतः पिता श्यामः द्वितीयपत्नीत्वेन लक्ष्मीं परिणीतवान् । लक्ष्म्याः उभौ पुत्रौ जातौ । स्वपुत्रयोः विषये तस्याः विशेषप्रेम । तौ विद्याभ्यासाय गुरुकुलं प्रति प्रेषितवती सा । किन्तु वराकः शङ्करः गृहस्य कृषिक्षेत्रस्य च कार्ये तया नियुक्तः । पुत्रः शङ्करः तु एतत् कार्यं सन्तोषेण एव करोति स्म ।

एवमेव कालः गतः । अथ कदाचित् श्यामः आकस्मिकतया व्याधिग्रस्तः जातः । सः स्वस्य अन्तिमकालं सन्निहितम् अवगतवान् । अतः पत्नीं स्वसमीपम् आहूय सः अवदत् – ''मम ज्येष्ठः शङ्करः निष्कपटः मुग्धः च । तस्य पालनं पोषणं च भवत्याः दायित्वम् । स्वपुत्रौ इव तमपि भवती प्रीत्या पोषयतु'' इति । अनन्तरदिने एव सः प्राणैः वियुक्तः जातः ।

लक्ष्मीः तु शङ्करं गृहात् प्रेषयितुम् इच्छति स्म । अतः सा कदाचित् शङ्करम् आहूय एकं प्राचीनं दर्पणं दत्त्वा अवदत् – ''वत्स ! ह्यः भवतः पिता मम स्वप्ने प्रत्यक्षीभूय आज्ञापयत् यत् एषः दर्पणः भवते दातव्यः इति । एषः महिमान्वितः दर्पणः । एषः एव भवतः दायभागः'' इति ।

कदाचित् कृषिक्षेत्रतः प्रत्यागमनसमये जीर्णकुटीरे वसन् कश्चन विरागी शङ्करस्य मात्रे पार्वत्यै एतं दर्पणं दत्तवान् आसीत् । सः विरागी महामहिमवान् इति ग्रामे सर्वे जनाः वदन्ति स्म । अतः पार्वती तं दर्पणं गृहम् आनीय पत्ये श्यामाय दत्तवती आसीत् । सः एव दर्पणः इदानीं लक्ष्म्या शङ्कराय दत्तः आसीत् ।

शङ्करः विमातुः हस्तात् दर्पणं स्वीकृत्य मुग्धस्वरेण अपृच्छत् – ''अम्ब ! इदानीं मया एतत् गृहं किं त्यक्तव्यम् ?'' इति ।

भामहः




**Petroleum Conservation Research Association**
"Sanrakshan Bhavan",10, Bhikaiji Cama Place, New Delhi-110 066
Phone : 26198856 Fax : 26109668
**Northern Region :**
Chief Regional Co-ordinator, "Sanrakshan Bhavan", 10, Bhikaiji Cama Place,
New Delhi-100 066. Phone : 26198753, 26182161 Fax : 26109668
**Eastern Region :**
Chief Regional Co-ordinator, Everest House (2nd Floor), 46-C, Chowringhee Road,
Kolkata-700 071. Phone : 22887250 / 22881913 Fax : 22880763
**Western Region :**
Chief Regional Co-ordinator, C-5, Keshva Building (Ground Floor),Bandra-Kurla Complex,
Bandra East, Mumbai-400 051. Phone : 26592587 / 26592181 Fax : 26590034
**Southern Region :**
Chief Regional Co-ordinator, TMB Mansion (1st Floor),739, Anna Salai,
Chennai-600 002. Phone : 28521662 / 28520417 Fax : 28521662



# महिमान्वितः दर्पणः

शङ्करः षोडशवर्षीयः तरुणः । तृतीये वयसि एव सः मातृवियोगं प्राप्तवान् आसीत् । अतः पिता श्यामः द्वितीयपत्नीत्वेन लक्ष्मीं परिणीतवान् । लक्ष्म्याः उभौ पुत्रौ जातौ । स्वपुत्रयोः विषये तस्याः विशेषप्रेम । तौ विद्याभ्यासाय गुरुकुलं प्रति प्रेषितवती सा । किन्तु वराकः शङ्करः गृहस्य कृषिक्षेत्रस्य च कार्ये तया नियुक्तः । पुत्रः शङ्करः तु एतत् कार्यं सन्तोषेण एव करोति स्म ।

एवमेव कालः गतः । अथ कदाचित् श्यामः आकस्मिकतया व्याधिग्रस्तः जातः । सः स्वस्य अन्तिमकालं सन्निहितम् अवगतवान् । अतः पत्नीं स्वसमीपम् आहूय सः अवदत् – ''मम ज्येष्ठः शङ्करः निष्कपटः मुग्धः च । तस्य पालनं पोषणं च भवत्याः दायित्वम् । स्वपुत्रौ इव तमपि भवती प्रीत्या पोषयतु'' इति । अनन्तरदिने एव सः प्राणैः वियुक्तः जातः ।

लक्ष्मीः तु शङ्करं गृहात् प्रेषयितुम् इच्छति स्म । अतः सा कदाचित् शङ्करम् आहूय एकं प्राचीनं दर्पणं दत्त्वा अवदत् – ''वत्स ! ह्यः भवतः पिता मम स्वप्ने प्रत्यक्षीभूय आज्ञापयत् यत् एषः दर्पणः भवते दातव्यः इति । एषः महिमान्वितः दर्पणः । एषः एव भवतः दायभागः'' इति ।

कदाचित् कृषिक्षेत्रतः प्रत्यागमनसमये जीर्णकुटीरे वसन् कश्चन विरागी शङ्करस्य मात्रे पार्वत्यै एतं दर्पणं दत्तवान् आसीत् । सः विरागी महामहिमवान् इति ग्रामे सर्वे जनाः वदन्ति स्म । अतः पार्वती तं दर्पणं गृहम् आनीय पत्ये श्यामाय दत्तवती आसीत् । सः एव दर्पणः इदानीं लक्ष्म्या शङ्कराय दत्तः आसीत् ।

शङ्करः विमातुः हस्तात् दर्पणं स्वीकृत्य मुग्धस्वरेण अपृच्छत् – ''अम्ब ! इदानीं मया एतत् गृहं किं त्यक्तव्यम् ?'' इति ।



''आं वत्स ! एषः दर्पणः एव भवदीयः दायः इति भवत्पितुः आशयः आसीत् । दायस्य प्राप्त्यनन्तरं गृहे वासस्य अधिकारः समाप्तः भवति खलु ? अतः भवान् इतः गत्वा स्वेच्छया जीवनं कर्तुम् अर्हति'' इति उक्त्वा लक्ष्मीः तस्मै चत्वरि रूप्यकाणि दत्तवती ।

शङ्करः स्वकीयानि वस्त्राणि कस्मिंश्चित् प्राचीने स्यूते पूरयित्वा तेषाम् अन्तः दर्पणं सावधानतया संस्थाप्य ततः निर्गतवान् । सायङ्कालाभ्यन्तरे सः राजधानीदुर्गस्य समीपं गतः । अर्धरूप्यकेण सः भोजनं क्रीत्वा भुक्त्वा कस्याञ्चित् धर्मशालायां शयितवान् ।

शयनात् पूर्वं सः स्यूतात् दर्पणं बहिः आनीतवान् । दर्पणः सुन्दरः आसीत् । दर्पणे स्वस्य प्रतिबिम्बं पश्यन् शङ्करः अवदत् - ''तात ! मात्रा उक्तं यत् एषः दर्पणः महिमयुक्तः इति । किन्तु एतस्य कीदृशः महिमा इति तया न विवृतम् । अतः एतस्य महिमा कः इति कथं मया ज्ञातव्यम् ?'' इति । ततः सः एतम् अंशम् एव चिन्तयन् निद्रावशं गतवान् ।

मध्यरात्रसमये धर्मशालायां कश्चन कोलाहलः उत्पन्नः । जनाः आतङ्कग्रस्ताः आसन् । तेषां कथनतः शङ्करेण अवगतं यत् व्याघ्रकेतुनामकः प्रतिवेशिराजः आकस्मिकतया आक्रमणं कृतवान् अस्ति इति । जनाः वदन्ति स्म - ''अस्माकं राजा मित्रवर्मा प्रजावत्सलः धर्ममार्गपरायणः च । जनकल्याणम् एव तस्य लक्ष्यम् । रात्रौ एव शत्रुसैन्येन आक्रमणं कृतम् अस्ति । अस्माकं राजा रणरङ्गं गतवान् अस्ति'' इति ।

धर्मशालायाः व्यवस्थापकः व्याघ्रकेतोः दुष्टतां, क्रूरतां, महत्त्वाकाङ्क्षितां च विवृत्य अवदत् - ''अस्माकं राजा धैर्येण रणरङ्गं गतवान् अस्ति । न जाने, विजयः कस्य भवेत् इति । अस्माकं राज्ञः एव जयः भवतु इति प्रार्थयामहे वयम्'' इति ।

एतत् श्रुतवान् शङ्करः दर्पणं पश्यन् अवदत् - ''अहो, यदि अस्माकं राज्ञः एव जयः भवेत् तर्हि वरं भवेत्'' इति ।

तदनन्तरक्षणे एव दर्पणतः विद्युत्तरङ्गाः उत्पन्नाः । लघ्वाकारकाणां सैनिकानां सरणिः एव दर्पणतः निर्गता । भूमिं प्राप्य ते सैनिकाः दृढकायाः जाताः । ते वेगेन शत्रुसेनां लक्ष्यीकृत्य निर्गताः ।

स्वस्य सैनिकाः एकैकशः धराशायिनः

जायमानाः सन्ति इत्येतत् दृष्टवतः व्याघ्रकेतोः महान् आघातः । दर्पणतः निर्गताः सैनिकाः तदीयान् सैनिकान् सर्वान् मारितवन्तः आसन् । अन्ते दर्पणतः एकः दीर्घः पाशः निर्गतः । सः व्याघ्रकेतुम् अबध्नात् ।

मित्रवर्मा अपि दर्पणतः निर्गतान् सैनिकान् आश्चर्येण पश्यन् स्थितवान् । पाशेन कृतं व्याघ्रकेतोः बन्धनम् अपि तेन दृष्टम् ।

सः सैनिकपङ्क्तेः मूलम् अन्विष्यन् धर्मशालाम् आगत्य शङ्करम् अपृच्छत् - "एतस्य महिमान्वितस्य दर्पणस्य कारणतः अद्य देशः रक्षितः जातः । भवान् कः ? कुत्रत्यः भवान् ?" इति ।

शङ्करः स्वस्य ग्रामस्य नाम उक्त्वा पितुः मरणस्य अनन्तरं यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण राजानं निवेद्य उक्तवान् - "एतस्य दर्पणस्य किं वैशिष्ट्यम् इति अहमपि न जानामि । धर्मात्मनः अस्माकं महाराजस्य विजयः भवतु इत्येतावत् एव मया दर्पणस्य पुरतः उक्तम् । ततः पश्यतः एव मम असंख्याः सैनिकाः इतः निर्गताः" इति ।

एतत् श्रुत्वा राजा आश्चर्यं प्रकटयन् अवदत् - "भवतः विमाता केन उद्देशेन एतं दर्पणं दत्तवती इति तु न ज्ञायते । किन्तु एतस्मात् दर्पणात् देशस्य रक्षणं तु जातम् । अहम् अद्यैव भवन्तं गुरुकुलं प्रति प्रेषयित्वा भवतः विद्याभ्यासस्य व्यवस्थां कर्तुम् इच्छामि । किम् एतत् सम्मतं भवतः ?" इति ।

शङ्करः शिरश्चालनपूर्वकं सम्मतिं दर्शितवान् । तदनन्तरक्षणे एव तस्य हस्ते स्थितः दर्पणः उड्डीय गतः, सशब्दं भग्नः सन् छिन्नविच्छिन्नः जातः च ।

एतत् दृष्टवान् शङ्करः महता खेदेन दर्पणस्य खण्डान् एव पश्यन् अतिष्ठत् । तदा राजा मित्रवर्मा तस्य स्कन्धे हस्तं स्थापयित्वा अवदत् - "दर्पणः भग्नः यत् तेन खेदः न प्राप्तव्यः भवता । महिमानः मनुष्यस्य प्रगतये दीर्घकालं यावत् उपकारकाः भवितुं न अर्हन्ति । मनुष्येण स्वस्य प्रगतिः स्वप्रयत्नेन स्वयम् एव साधनीया । अतः दर्पणः भग्नः इति विषादः न उचितः" इति ।

एतत् श्रुतवतः शङ्करस्य मुखे मन्दहासः उत्पन्नः । सः राज्ञा सह ततः निर्गतवान् गुरुकुलप्रवेशाय ।



# यथायोग्यम् उत्तरं दत्तवान् अजपालकः



पूर्वं कश्चन राजा आसीत् । तस्य सम्पत्तिः महती । सा सम्पत्तिः न सुवर्णरजतादि-मुद्रारूपेण, अपि तु धेनुगजाश्वोष्ट्रादिरूपेण ।

कदाचित् सः सर्वान् सेवकान् अधि-कारिणः च आज्ञापितवान् यत् अमुके दिने अमुके मुहूर्ते मेलनीयम् इति । एतस्य मेलनस्य कारणं किम् इति तेन न सूचितम् आसीत् । अतः सेवकाः अधिकारिणः च कारणविषये परस्परं चर्चां कृतवन्तः, स्वमत्यनुगुणम् 'एतत् एव कारणं स्यात्' इति ऊहां कृतवन्तः च ।

निश्चिते दिने सर्वे सम्मिलिताः । राजा गाम्भीर्येण सभां प्रविश्य अपृच्छत् - "किं सर्वे उपस्थिताः ?" इति ।

सभायां मौनं प्रसृतम् आसीत् ।

राजा सभां सकृत् दृष्ट्वा अवदत् - "भवतां सर्वेषां मौनतः अहम् अव-गच्छामि यत् कोऽपि अनुपस्थितः नास्ति इति । अहं कमपि प्रश्नं प्रष्टुम् इच्छामि । तस्य उत्तरम् एकैकेन अपि दातव्यम् इति मम इच्छा" इति ।

क्षणकालं सभायां नीरवता प्रसृता । राजा पुनः अवदत् - "मम मनसि किम् अस्ति इति किं भवन्तः वक्तुम् अर्हन्ति ? भवताम् उत्तरं किं भवेत् इति ज्ञातुम् एव अहम् एतां सभाम् आयोजितवान् अस्मि । भवन्तः आगत्य उत्तरं वक्तुम् अर्हन्ति" इति ।

ततः तत्रत्येषु एकैकः अपि अग्रे आगत्य राज्ञः पुरतः स्थित्वा स्वमत्यनुगुणम् उत्तरम् अवदत् । किन्तु तैः उत्तरैः राजा न सन्तुष्टः । सः शिरश्चालनेन तेषाम् उत्तरं निराकृतवान् । राज्ञः मुखं गम्भीरम् आसीत् । अतः तत्र कोपः अस्ति, उत असन्तोषः तिष्ठति, उताहो चिन्ताबाधा दृश्यते, आहोस्वित् परमशान्तता आवसति इति वक्तुं कोऽपि न अशक्नोत् ।

सर्वेषां कथनस्य अनन्तरं राजा सभासदः

उद्दिश्य अवदत् - ''भवद्भिः उक्तम् एकमपि उत्तरं मम सन्तोषाय न जातम् । भवन्तः स्वीयेषु कार्येषु प्रवृत्ताः भवितुम् अर्हन्ति'' इति ।

मन्त्री सभाभवनस्य कोणे स्थित्वा सर्वमपि पश्यन् मौनेन स्थितवान् आसीत् । राजा तं स्वसमीपम् आहूय आदिशत् - ''मम मनसि स्थितं यः अवगन्तुं शक्नुयात् तादृशः जनः मासाभ्यन्तरे अन्विष्य आनेतव्यः भवता । यदि एतत् कर्तुं न शक्येत तर्हि भवान् मन्त्रि-पदवीतः च्युतः भवेत्'' इति । एतावत् आदिश्य अन्तःपुरं प्रति गतवान् राजा ।

मन्त्रिणः महती चिन्ता आरब्धा । 'राज्ञः मनसि किं प्रवर्तते इति ज्ञातुं समर्थः जनः मया कुत्र अन्वेष्टव्यः ? तादृशः जनः किं कोऽपि अस्ति ?' इति बहुधा चिन्तितवान् मन्त्री । तथापि तादृशस्य प्राप्त्यर्थं मार्गः कोऽपि न प्राप्तः । रात्रौ यद्यपि तेन शयनं कृतं तथापि चिन्ताभारकारणतः निद्रा किञ्चिदपि न प्राप्ता ।

अनन्तरदिने प्रातः उत्थाय सः तादृशस्य जनस्य अन्वेषणाय उद्युक्तः । यः यः मार्गे मिलितः तं तं सः स्वस्य समस्यां न्यवेदयत् । किन्तु कोऽपि तस्य साहाय्ये न समर्थः । केचन एतद्विषये अज्ञाः आसन् । पुनः केचन राज्ञः सम्बद्धे एतस्मिन् व्यवहारे प्रवृत्तिं दर्शयितुं न इष्टवन्तः । मन्त्री सर्वत्र अटित-वान् । कुतश्चित् अपि साहाय्यं न प्राप्तं तेन ।

दिनानि यथा यथा गतानि तथा तथा तदीया निद्रा अपि अपगता । शय्यायाम् उपविश्य निरन्तरं चिन्तां करोति स्म सः । आहारः अपि न रोचते स्म तस्मै । आहारं सेवताम् इति पत्नी अनुरोधं करोति स्म । किन्तु कवलमात्रम् आहारसेवनम् अपि निराकरोति स्म सः ।

कदाचित् पितुः एतां दुरवस्थां दृष्टवती तदीया पुत्री पृष्टवती - ''तात ! का चिन्ता भवतः ? किमर्थम् एवं आदिनं चिन्ता क्रियते ? किमर्थं निद्राहारादिकं भवते न रोचते ? कृपया मां सर्वं वदतु'' इति ।

किन्तु मन्त्री मौनम् आश्रितवान् । अनन्तर-दिने स्नाने अपि अरुचिं दर्शितवान् सः । एतत् सर्वथा असहमाना पुत्री उक्तवती - ''तात ! यदि भवता एवं स्नानाहारादिकं निरा-क्रियेत तर्हि अहं मम माता चापि आहारसेवनं न करिष्यावः । भवन्तं या चिन्ता बाधते तां भवान् मां वदेत् एव । अहं कदाचित् तस्याः परिहारोपायं सूचयितुं शक्नुयाम् अपि'' इति ।

मन्त्री झटिति उत्थाय उपविष्टवान् । 'भवतः चिन्तायाः परिहारं कर्तुं प्रयत्नं करिष्यामि' इति अद्यावधि तं कोऽपि न उक्तवान् आसीत् । अतः पुत्र्याः वचनेन सः नितरां सन्तुष्टः ।



व्यथामिश्रितेन स्वरेण सः राज्ञः आज्ञां कालमितिं च अश्रावयत् ।

''इतोऽपि कति दिनानि अवशिष्टानि ?'' इति अपृच्छत् पुत्री ।

''दिनं दिनद्वयं वा अवशिष्टं स्यात्'' इति उक्तवान् मन्त्री ।

''स्पष्टतया कति दिनानि अवशिष्टानि इति भवान् वदतु । तदभ्यन्तरे अहं राज्ञा सूचितं जनम् आनेष्यामि । इदानीम् उत्थाय भवान् स्नात्वा अस्माभिः सह आहारं सेवताम् । शिष्टम् अनन्तरं चिन्तयिष्यामः'' इति अनुरोधपूर्वकम् उक्त्वा पितरम् उत्थापितवती पुत्री ।

भोजनसमये मन्त्री अवदत् - ''परश्वः एव मया राज्ञः पुरतः सः जनः उपस्थापनीयः । तदभ्यन्तरे भवती तादृशं विशिष्टं जनं कुतः आनयेत् ?'' इति ।

''परश्वः खलु भवता तादृशः कश्चन जनः नेतव्यः ? तात ! अलं चिन्तया । तदभ्यन्तरे अहं तादृशं जनम् आनीय भवतः पुरतः उपस्थापयिष्यामि'' इति आत्मविश्वासपूर्वकम् उक्तवती पुत्री ।



पुत्री तादृशस्य जनस्य अन्वेषणाय कुत्रापि न गतवती एव । तैः पालितानाम् अजादीनां पालकः कश्चन तरुणः आसीत् । सः स्वयं त्रीन् मेषान् पालयति स्म अपि । सः बधिरः मूकश्च आसीत् । सा तम् आहूय भोजनादिकं दत्त्वा अभिनयेन सूचितवती यत् भवता मम पित्रा सह राजास्थानं प्रति गन्तव्यम् इति । सः अजपालकः शिरश्चालनपूर्वकम् एतत् अङ्गीकृतवान् ।

यदा राजास्थानं प्रति प्रस्थानस्य समयः आगतः तदा पुत्री तम् अजपालकं पितुः पुरतः उपस्थापितवती । तं दृष्ट्वा आश्चर्यम् अनुभवन् मन्त्री पुत्रीम् अवदत् - ''वत्से ! एषः मूकः बधिरश्च खलु !'' इति ।

''तात ! अलं चिन्तया । विना चिन्ताम् एतम् आत्मना सह नयतु भवान् । राज्ञः मनसि किम् अस्ति इति एषः सूचयिष्यति'' इति सविश्वासम् अवदत् पुत्री ।

पुत्र्यां विशेषविश्वासः आसीत् मन्त्रिणः । अतः सः आत्मना सह तस्य अजपालकस्य नयनम् अङ्गीकृतवान् । ततः तौ राजास्थानं प्रति गतवन्तौ ।

मन्त्री कीदृशं जनम् आनयेत् इति द्रष्टुम् असंख्याः जनाः तस्मिन् दिने राजास्थाने उपस्थिताः आसन् । 'अहम् आगतः अस्मि' इति वार्तां प्रेषितवान् मन्त्री । राजा आगत्य सिंहासने उपविष्टवान् । मन्त्री तं नमस्कृतवान् ।

अजपालकः अपि राजानं नमस्कृतवान् । राजा किमपि अवदन् एकाम् अङ्गुलिं दर्शितवान् । सः अजपालकः अङ्गुलिद्वयं दर्शितवान् । राजा मन्दहासं दर्शयन् अङ्गुलित्रयं दर्शितवान् । अजपालकः निराकरणपूर्वकं शिरः चालयन् पुनरपि अङ्गुलिद्वयम् एव दर्शितवान् ।

राज्ञः मुखे तृप्तिसूचकः मन्दहासः उत्पन्नः । ''मन्त्रिवर्य ! भवता अद्वितीयः एव जनः आनीतः । एतेन यथायोग्यम् उत्तरं दत्तम् अस्ति । एतादृशम् आनीतवन्तं भवन्तं विशेषतः अभिनन्दामि'' इति अवदत् सः ।

''अनुगृहीतः अस्मि महाराज !'' इति विनयेन नमस्कृत्य मन्त्री अवदत् - ''प्रभो ! भवता किं पृष्टं, तेन च कीदृशम् उत्तरं दत्तम् इत्येतत् ज्ञातुं मम, अत्र सम्मिलितानां च महत् अस्ति कुतूहलम् । यदि न आक्षेपः, तर्हि कृपया विव्रियताम्'' इति ।

''अत्र न किमपि विशेषरहस्यम् । एकाम् अङ्गुलिं दर्शयता मया सूचितं यत् अहम् अद्वितीयः प्रभुः अस्मि इति । तदा तेन अङ्गुलिद्वयं दर्शयता स्मारितं यत् भवान् जगत्प्रभुः चेति उभौ प्रभू स्तः इति । 'तृतीयः अपि किम् अस्ति ?' इति ज्ञातुं मया अङ्गुलित्रयं दर्शितम् । 'तृतीयः कोऽपि नास्ति । भवन्तौ एव प्रभू' इति अङ्गुलिद्वयदर्शनेन तेन उक्तम् । मम मनसि यत् अस्ति तत् सम्यक् एव अवगतम् अस्ति तेन । तीक्ष्णमतिः अस्ति अयम्'' इति विवृतवान् राजा ।

मन्त्रिणे अजपालकाय च योग्यम् उपायनं दत्त्वा तौ प्रेषितवान् राजा । गृहं प्रत्यागत्य



मन्त्री पुत्र्याः साहाय्येन अजपालकम् अपृच्छत् यत् राज्ञः मनसि किम् अस्ति इति भवता कथं ज्ञातम् इति । तदा सः अजपालकः अभिनयेन असूचयत् - ''भवता किम् एकः मेषः विक्रीयेत इति राज्ञा पृष्टम् । भवान् राजा इत्यतः उभौ मेषौ विक्रेतुम् अर्हामि इति मया सूचितम् । यदा सः हस्तसङ्केतेन असूचयत् यत् अहं भवतः त्रीन् अपि मेषान् क्रेतुम् इच्छामि इति, तदा मया निराकरणपूर्णकं सूचितं यत् उभौ एव मेषौ अहं विक्रेतुं सिद्धः इति'' इति ।

एतत् श्रुत्वा मन्त्री तत्पुत्री च मनःपूर्वकं हसितवन्तौ । 'राज्ञा किमपि पृष्टम् । एतेन अन्यदेव उक्तम् । तथापि अहं तु रक्षितः अभवम् । देवो दयालुः' इति स्वगतम् अवदत् मन्त्री ।



# महासाध्वी

ब्रह्मदत्तः यदा राज्यं परिपालयन् आसीत् तदा बोधिसत्त्वः काशीसमीपे स्थिते कस्मिंश्चित् सम्पन्नपरिवारे जन्म प्राप्तवान् आसीत् ।

सः बाल्ये एव सर्वाः विद्याः अधीतवान् । यदा सः प्राप्तवयस्कः जातः तदा तदीयौ मातापितरौ काशीनगरीयां काञ्चित् कन्यां चित्वा तस्य विवाहं निर्वर्तितवन्तौ । तस्याः नाम सुजाता इति । सुजाता सुन्दरी, गुणवती, विवेकिनी च । सा पत्युः श्वश्रूश्वशुरयोः च सेवां श्रद्धया भक्त्या च करोति स्म ।

सुजातायां विशेषानुरागः आसीत् बोधिसत्त्वस्य । कदाचित् सुजता पतिम् अवदत् – ''मम मातापितरौ वृद्धौ स्तः । तौ द्रष्टव्यौ इति मम मनसि तीव्रा इच्छा जायते एषु दिनेषु । अतः किम् आवौ तौ दृष्ट्वा आगच्छाव ?'' इति ।

सुजातायाः इच्छां ज्ञात्वा महता आनन्देन बोधिसत्त्वः अवदत् – ''तौ द्रष्टव्यौ इति इच्छा मम मनसि अपि बहोः कालतः आसीत् । किन्तु गृहकार्याणि बहूनि आसन् इत्यतः मौनेन आसम् । तावता भवती एव इच्छां प्रकटितवती । भवतु ! अचिरात् एव आवां काशीं गत्वा आगच्छाव'' इति ।

अनन्तरदिने एव काशीं प्रति गमनाय सन्नाहः आरब्धः । आवश्यकानि वस्तूनि शकटे आरोप्य तौ काशीं प्रति प्रस्थितवन्तौ । बोधिसत्त्वः स्वयं शकटं चालयति स्म ।

यदा काशीनगरस्य सीमा प्राप्ता तदा कस्यचित् वृक्षस्य अधः शकटः स्थगितः । समीपस्थे कासारे हस्तपादादिकं प्रक्षाल्य तौ भोजनं कृतवन्तौ । किञ्चित्कालं यावत् विश्रान्तिसुखम् अनुभूय तौ प्रयाणम् अनुवर्तितवन्तौ ।

यावत् तौ नगरं प्रविष्टवन्तौ तावता काशीराजः गजम् आरुह्य सपरिवारं नगरं प्रविष्टवान् । तदीयः गजः सम्यक् अलङ्कृतः आसीत् ।

एतां यात्रां द्रष्टुम् ऐच्छत् सुजाता । बोधिसत्त्वः एतत् अनुमतवान् । अतः सा शकटात् अवतीर्य पादाभ्यां मार्गे प्रस्थितवती । बोधिसत्त्वः तस्याः पृष्ठतः मन्दतया शकटं नयति स्म ।

गजारूढः राजा परमसुन्दरीं सुजाताम् अपश्यत् । सुजाता परिणेतव्या इति इच्छा तस्य मनसि उत्पन्ना । तस्याः कुलगोत्रादिकं सः विचारितवान् । सा कस्य पुत्री इति तेन ज्ञातम् । तस्याः पृष्ठतः स्थितः एव तस्याः पतिः इत्यपि तेन ज्ञातम् ।

सः अचिन्तयत् यत् केनचित् उपायेन एतस्याः पतिं मारयित्वा एषा मया परिणेतव्या इति । तदर्थं तेन काचित् कुटिला योजना अपि कृता ।

सः विश्वासपात्रं कञ्चित् दूतम् आहूय तस्य हस्ते स्वस्य मुकुटं समर्प्य अवदत् - ''भवन्तः कथमपि उपायेन एतं मुकुटं बोधिसत्त्वस्य शकटे स्थापयन्तु । किन्तु केनापि एतत् ज्ञातं न भवेत्'' इति ।

एतदनुगुणं सेवकाः मुकुटं बोधिसत्त्वस्य शकटे कथमपि स्थापितवन्तः । एतं विषयं राजानम् उक्तवन्तः च । ततः अल्पे एव काले वार्ता प्रसृता यत् राज्ञः मुकुटः केनापि चोरितः अस्ति इति । राज्ञः भटाः तस्य मुकुटस्य निमित्तं सर्वत्र अन्वेषणम् आरब्धवन्तः ।

कश्चन भटः बोधिसत्त्वस्य शकटे अपि अन्वेषणम् अकरोत् । तत्र मुकुटः प्राप्तः । बोधिसत्त्वः एव चोरः इति वदन्तः भटाः तं बद्ध्वा राजसमीपं नीतवन्तः ।

राजा तं दृष्ट्वा महता क्रोधेन आज्ञापितवान् - ''राजमुकुटं चोरितवन्तम् एतं कारागारे स्थापयन्तु । अद्य एव एतस्य शिरश्छेदः भवतु'' इति ।



सेवकाः तं कशया प्रहरन्तः ततः नीतवन्तः । 'मम योजना सफला जाता' इति चिन्तयन् राजा नितरां सन्तुष्टः ।

बोधिसत्त्वं प्रहरन्तः एव राजमार्गे नयन्तः भटाः तस्य अपमाननं सम्यक् कृतवन्तः । ततः शिरश्छेदाय तं वधस्थानं प्रति नीतवन्तः ते ।

एतां वार्तां श्रुतवती सुजाता रुदती पत्युः पृष्ठतः एव गतवती । 'मत्कारणतः एव भवतः एषा स्थितिः जाता' इति विलपनं कृतवती सा । वध्यस्थानम् अपि गतवती सा उच्चैः आक्रोशनं कृतवती - ''किं निरपराधिनः रक्षणाय भगवान् अपि मतिं न करोति ? दुष्टानाम् अत्याचारस्य किम् अन्त्यम् एव

नास्ति ?'' इति ।

साध्व्याः तस्याः विलपनम् इन्द्रेण अपि श्रुतम् । तस्मात् तस्य सिंहासनं कम्पमानं जातम् ।

'एवं किमर्थं प्रवर्तते ?' इति चिन्तयन् सः स्वस्य दिव्यदृष्ट्या सर्वम् अपि अवगतवान् । यत् अन्याय्यं प्रचलति तत् पूर्णतः अवगतं तेन ।

सः स्वस्य सामर्थ्यम् उपयुज्य राज्ञः स्थाने बोधिसत्त्वं प्रतिष्ठापितवान्, बोधिसत्त्वस्य स्थाने राजा अतिष्ठत् ।

इन्द्रेण कृतम् एतत् परिवर्तनं केनापि न ज्ञातम् एव । सिंहासने स्थितवान् राजा एव इति भावितवन्तः जनाः । एवमेव वधकः अपि अचिन्तयत् यत् मम पुरतः बोधिसत्त्वः एव अस्ति इति ।

पुरतः स्थितस्य शिरः कर्तनीयम् इति राज्ञः आज्ञा आसीत् खलु ? अतः वधकः एकेन एव खड्गप्रहारेण स्वस्य पुरतः स्थितस्य शिरः कर्तितवान् । तत्समनन्तरम् एव काशीराजस्य कलेवरेण वास्तविकं वेषभूषादिकं प्राप्तम् अभवत् ।

इदानीं जनाः ज्ञातवन्तः यत् राज्ञः एव शिरश्छेदः जातः अस्ति इति ।

समग्रायां राजधान्यां कोलाहलः उत्पन्नः । एतस्याः अपूर्वघटनायाः कारणं कः इत्यत्र सर्वत्र चर्चा उत्पन्ना ।

तदा इन्द्रः बोधिसत्त्वस्य जनानां च पुरतः प्रत्यक्षः जातः । प्रवृत्तं सर्वं निवेद्य सः जनान् उद्दिश्य – ''इतःपरं बोधिसत्त्वः एव भवतां राजा भविष्यति । एषा साध्वी सुजाता च पट्टमहिषी भविष्यति'' इति उक्त्वा अदृश्यतां गतवान् ।

'दुष्टस्य राज्ञः पापघटः पूर्णः आसीत् । अतः एव सः आत्मनः कुकृत्यस्य अनुरूपं फलं प्राप्तवान्' इति चिन्तयन्तः जनाः बोधिसत्त्वम् एव राजानं मतवन्तः । बोधिसत्त्वः सिंहासनम् अलङ्कृतवान् । सुजाता महाराज्ञी जाता ।

तस्मात् दिनात् काशीराज्ये धर्मस्य शक्तिः प्रवृद्धा । जनाः सर्वे धर्माचरणपराः जाताः । काले वृष्टिः अपि जाता । देशश्च सुसमृद्धः जातः । तस्मात् सर्वे जनाः सुखेन जीवनम् आरब्धवन्तः ।





# विष्णुपुराणम्

विभीषणः इव मन्दोदरी अपि रावणं बोधितवती – ''नाथ ! सीताम् आनयता भवता उचितं न कृतम् । सीता यदा असहाया आसीत् तदा भवान् सुवर्णम् इव, पशुपक्षिणः इव च ताम् अपहृत्य आनीतवान् । एतत् अनुचितं कार्यम् । यदि सीता प्रत्यर्प्येत तर्हि एव उभयोः अपि पक्षयोः जीवनाशः स्थगितः भवेत्'' इति ।

''सामान्यात् मानवात् यः भीतः भवेत् तादृशः भीरुः न भवत्याः पतिः । यस्य दर्शनात् देवाः अपि भीत्या कम्पन्ते सोऽहं रावणः किं मनुष्यमात्रस्य पुरतः शिरः अवनमयेयम् ? किं भवती मां भीरुतां बोधयितुम् इच्छति ? सः रामः मम केशान् कम्पयितुम् अपि न शक्नोति'' इति दर्पेण अवदत् रावणः ।

एवं रावणः सर्वेषाम् अपि बोधनं निराकुर्वन् स्वकृत्यं समुचितम् एव भावयति स्म ।

रावणं जेतुं रामः वानराणां सङ्घटनम् आरब्धवान् । सुग्रीवः, अङ्गदः, जाम्बवान्, नीलः, सुषेणः इत्यादयः महायोद्धारः अरण्ये निवसतः सर्वान् कपिवीरान् एकत्र आनीतवन्तः । हनूमतः मार्गदर्शनेन सेना सुसङ्घटिता, युद्धाय सन्नद्धा च जाता ।

नीलस्य नेतृत्वे सेतुनिर्माणकार्यम् अपि आरब्धम् । समर्थाः वानराः महतीं शिलाम् आनीय समुद्रे स्थापितवन्तः । हनूमान् तु पर्वतान् एव आनीय समुद्रे न्यमज्जयत् । अन्यैः वानरैः स्वसामर्थ्यानुगुणं शिलाः आनीय स्थापिताः । एवं शतयोजनविस्तीर्णः सेतुः सिद्धः ।

विभीषणः लङ्कां परित्यज्य रामं शरणं गतवान् । रामः अभयं दत्त्वा अवदत् यत् भवन्तं लङ्कायाः राजानं करिष्यामि इति ।



तस्मिन् एव क्षणे लङ्काधिपतित्वेन समुद्रजलेन विभीषणस्य अभिषेकः अपि जातः ।

रामः महत्या वानारसेनया सह आक्रमणं कृतवान् अस्ति इत्यस्यां गुप्तचरैः आनीतायां वार्तायां रावणः विश्वासं न कृतवान् एव । 'शतयोजनविस्तीर्णः सेतुः कथं निर्मितः स्यात् ? त्रिलोकीम् अपि भाययन्तं रावणं मां संहृत्य सामान्यः मानवः रामः किं सीतां नेतुं शक्नुयात् ? सर्वथा असम्भवम् एतत्' इति चिन्तयित्वा रावणः अट्टहासपूर्वकम् अवदत् - ''तेषां मरणकालः सन्निहितः अस्ति । अतः ते आगच्छन्तु नाम'' इति ।

तदा रावणस्य मन्त्री प्रहस्तः अवदत् - ''प्रभो ! आगमनमार्गे एव शत्रुः सम्मुखीकरणीयः । नगरप्रवेशतः पूर्वम् एव शत्रोः संहारः उचितः स्यात्'' इति ।

एतत् श्रुत्वा रावणः अहङ्कारेण अवदत् - ''ते नगरं प्रविशन्तु नाम । कुम्भकर्णः आ बहोः कालात् पूर्णोदरं भोजनं न प्राप्तवान् अस्ति । जाले पतिताः मीनाः इव ते सर्वे कुम्भकर्णस्य बुभुक्षायाः निवारणे उपकारकाः भवेयुः'' इति ।

रामस्य सेना लङ्कातीरं प्राप्तवती आसीत् । रामः व्यूहरचने अवधानं दत्तवान् आसीत् ।

एतदवसरे एव अङ्गदः ततः निर्गत्य रावणसमीपं गत्वा - ''हे रावण ! अहं वालिपुत्रः अस्मि । मम पिता पूर्वं कदाचित् भवन्तं स्वपुच्छेन बद्ध्वा दूरे क्षिप्तवान् आसीत् । तस्मात् दिनात् तस्य विषये भवान् आदरं वहति स्म । अतः एव भवन्तं बोधयितुम् अहम् उपस्थितः अस्मि । रामस्य शत्रुतां परित्यज्य सीतां तस्मै अर्पयतु । यत् कृतं तद्विषये क्षमां याचतु । अहङ्कारवशात् यदि भवान् - 'वानरसेना किं वा कुर्यात्' इति उपेक्षाभावं वहेत् तर्हि सर्वनाशः प्राप्येत । वानराः कीदृशाः वीराः इति पुनः पुनः ज्ञापनीयं नास्ति इति अहं भावयामि'' इति ।

अङ्गदस्य एतानि वचनानि श्रुत्वा रावणः नितरां क्रुद्धः । सः खड्गेन तं प्रहर्तुम् उद्युक्तः । रावणस्य गर्वं भञ्जयितुम् इच्छन् अङ्गदः पादप्रहारेण रावणस्य किरीटं पातितवान् । एतस्मात् रावणः अपि पतितः । एतदनन्तरं प्रतिगत्य अङ्गदः स्वस्य सेनायां स्थितवान् ।

वानरसेनया लङ्कायाः चतुर्षु अपि भागेषु आक्रमणं कृतम्, राक्षससंहारः च आरब्धः । असंख्यैः वानरैः लङ्कानगरं प्रविष्टम् । एतत् दृष्टवान् रावणः कुम्भकर्णं जागरितवान् ।

कुम्भकर्णः पूर्वं सङ्कल्पितवान् आसीत् यत् ब्रह्माणं सन्तोष्य षण्मासात्मकम् आहारसेवनं दिनं यावत् निद्रा च भवेत् इति वरः प्राप्तव्यः इति । किन्तु ब्रह्मणा सरस्वत्याः साहाय्येन तन्मुखात् अन्यथा एव वाचितम् । कुम्भकर्णः षण्मासात्मिकां निद्रां, दिनात्मकम् आहारसेवनं च अयाचत । ब्रह्मा 'तथास्तु' इति अवदत् । वरदानसमये ब्रह्मा एतदपि उक्तवान् आसीत् यत् निद्रासमाप्तितः पूर्वम् एव, तन्नाम षण्मास-समाप्तितः पूर्वम् एव, यदि कोऽपि तं जागरयेत् तर्हि तदीया शक्तिः क्षीणा भविष्यति इति ।

अतः रावणः यदा जागरितवान् तदा कुम्भकर्णः नितराम् असन्तुष्टः जातः । सः अपि रावणम् अबोधयत् यत् विना कारणं युद्धं मास्तु, सीताप्रत्यर्पणम् एव वरम् इति ।



तदीयम् उपदेशं श्रुत्वा नितरां क्रुद्धः रावणः अवदत् - ''एतादृशस्य उपदेशस्य निमित्तं मया भवान् न जागरितः । यदि शक्यते तर्हि रणरङ्गं गत्वा शत्रून् सम्मुखीकरोतु । अन्यथा भीरुः इव पुनरपि निद्रां करोतु'' इति ।

एतस्मात् कुम्भकर्णे क्रोधः जागरितः जातः । अग्रजस्य कोपम् असहमानः सः ततः रणरङ्गं गतवान् । तेन वानराः एकैकशः खादिताः । अन्ते सः रामस्य बाणप्रहारं प्राप्य प्राणैः वियुक्तः जातः ।

कुम्भकर्णस्य मरणस्य अनन्तरं बहवः राक्षसाः रणरङ्गम् आगत्य प्राणवियोगं प्राप्त-वन्तः । अन्ते रावणस्य पुत्रः महाबली इन्द्रजित् क्रोधेन गर्जन् रणरङ्गम् आगतवान् ।

स्वस्य पुत्रस्य अलौकिकवीरताविषये रावणस्य पूर्णः विश्वासः आसीत् । सः इन्द्रम् अपि पराजितं कृत्वा इन्द्रजित् इति नाम प्राप्तवान् आसीत् । सः मेघानां मध्ये निलीय स्थित्वा मेघाः इव गर्जन् युद्धं करोति स्म अपि । अतः 'मेघनादः' इत्यपि नाम आसीत् तस्य । सः मन्त्रतन्त्रविद्यासु निपुणः मायावी योद्धा यथा, तथैव कुशलः राजनीतिज्ञः अपि आसीत् । चतुर्दश वर्षाणि निद्राहारादिकं यः त्यक्तवान् तादृशः ब्रह्मचर्यव्रती एव तं हन्तुम् अर्हति स्म, न अन्यः । तादृशस्य व्रतस्य पालयितुः प्राप्तिः असम्भवा एव इत्यतः रावणः चिन्तयति स्म यत् मम पुत्रः अमरः अजेयश्च अस्ति, सः एकः एव रामसेनाम् उन्मूलयिष्यति इति ।

रणरङ्गम् आगतः इन्द्रजित् रामसेनायां चिन्ताम् उत्पादितवान् । । सः मायया सीतां सृष्ट्वा रामस्य पुरतः तां खण्डशः कर्तितवान् ।



तदा लक्ष्मणः रामं बोधितवान् - 'एतत्सर्वम् इन्द्रजितः माया' इति । ततः इन्द्रजिल्लक्ष्मणयोः युद्धम् आरब्धम् ।

रावणः विद्युज्जिह्वेन रामस्य शिरः कारितवान् । 'त्रिशूलविद्धम् एतत् शिरः सीतायै दर्शयतु' इति भटान् आदिष्टवान् च ।

सीता एतस्य रहस्यं जानती क्रोधावेशेन अवदत् - ''भवतां मायाम् अहं सम्यक् अवगच्छामि । इदानीं रामस्य शिरसः या गतिः भवद्भिः दर्शिता सा एव गतिः रावणस्य दशानाम् अपि शिरसां भविष्यति । स्मरन्तु एतत्'' इति ।

इन्द्रजित् मेघानां मध्ये निलीय तिष्ठन् नागास्त्रस्य प्रयोगं कृत्वा रामलक्ष्मणौ नागपाशेन बद्धवान् । तदा गरुडः आगत्य नागान् नाशयित्वा तौ पाशविमुक्तौ कृतवान् । अनन्तरम् इन्द्रजित् लक्ष्मणस्य बाणेन मारितः जातः ।

पुत्रस्य मरणात् रावणस्य बलं क्षीणं जातम् । अतः सः पाताललङ्कायां निवसतः भ्रातुः महिरावणस्य साहाय्यम् अयाचत । सः तम् अवदत् यत् रामलक्ष्मणौ नीत्वा कालीदेव्यै बलिरूपेण अर्पयतु इति ।

रावणस्य अनुरोधस्य कारणतः महिरावणः सुप्तौ रामलक्ष्मणौ चोरयित्वा पातालं नीतवान् । कालीमन्दिरे तयोः बलिरूपेण अर्पणाय सन्नाहम् आरब्धवान् च ।

हनूमान् तस्मिन् एव समये तत्र गत्वा मन्दिरतः रामलक्ष्मणौ आनीतवान् । ततः महिरावण-रामलक्ष्मणानां मध्ये घोरं युद्धं प्रवृत्तम् । तथापि महिरावणं मारयितुं रामलक्ष्मणौ न शक्तौ । महिरावणस्य कारागारे चन्द्रसेना नाम काचित् रामभक्ता आसीत् । सा महिरावणस्य मरणरहस्यं जानाति स्म । हनूमान् ततः तत् रहस्यं ज्ञातवान् । अन्ते रामः महिरावणं संहृतवान् । महिरावणस्य मरणस्य अनन्तरं हनूमान् मत्स्यवल्लभं पातालस्य राजानं कृतवान् । रामलक्ष्मणौ स्कन्धे आरोप्य लङ्कां प्रत्यागतवान् च ।

महिरावणस्य मरणात् रावणस्य शक्तिः इतोऽपि क्षीणा जाता । सर्वे महायोद्धारः दिवं गताः आसन् । रामस्य पराजयाय तेन कृताः सर्वाः योजनाः विफलाः जाताः आसन् । अतः सः मायायोद्धृणां सृष्टये चतुरङ्गसेनायाः सृष्टये च पाताललङ्कायागम् आरब्धवान् । एतस्मिन् यागे विघ्नम् उत्पादयितुम् इच्छन् अङ्गदः अदृश्यकारिण्याः विद्यायाः साहाय्येन रावणस्य भवनं प्रविष्टवान्, रावणस्य पुरतः

एव मन्दोदरीं केशेषु गृहीत्वा आकृष्टवान् च । एतस्मात् रावणस्य ध्यानस्य भङ्गः जातः ।

अन्ते अनन्यगतिकः रावणः स्वयं रणरङ्गं प्रविष्टवान् । रणरङ्गं प्रति गच्छन्तं रावणं मन्दोदरी स्मारितवती –''इदानीम् अपि सीतां समर्प्य कुतो वा क्षमा न याच्यते ? रामः अवश्यं क्षाम्येत्'' इति ।

किन्तु रावणः एतं प्रस्तावं निराकुर्वन् – ''सूर्यः चन्द्रः च स्वगतिं परिवर्तयेतां कदाचित्, किन्तु एषः रावणः सकृत् कृतं निश्चयं न परिवर्तयिष्यति । प्राणान् पणीकर्तुम् अपि सिद्धः एव अहम्'' इति उक्त्वा सः दशभिः अश्वैः उह्यमानं रथम् आरुह्य रणरङ्गं प्रति प्रस्थितः । रणरङ्गे आदौ तेन लक्ष्मणः सम्मुखीकृतः, यश्च इन्द्रजितं मारितवान् आसीत् । तं दृष्ट्वा रावणः नितरां क्रुद्धः ।

रावणः पूर्वं कदाचित् इन्द्रं पराजित्य कारागारे स्थापितवान् आसीत् । आत्मनः मुक्तिं सम्पादयितुम् इन्द्रः रावणाय एकं दिव्यास्त्रं दत्तवान् आसीत् । तदेव अस्त्रं लक्ष्मणं लक्ष्यीकृत्य प्रयुक्तवान् रावणः । तस्य अस्त्रस्य आघातं प्राप्य लक्ष्मणः मूर्च्छां गतः ।

हनूमान् तस्मिन् एव क्षणे सञ्जीविनीसस्यस्य आनयनाय हिमालयं प्रति धावितवान् । रात्र्यभ्यन्तरे एव सः ओषधिसस्यम् आनीय लक्ष्मणस्य प्राणानां रक्षणम् अकरोत् ।

इन्द्रः रामस्य साहाय्याय मातलिना सह सारथिसहितं कञ्चित् रथं प्रेषितवान् । रामः तं रथम् आरुह्य रावणेन सह युद्धम् आरब्धवान् । तयोः उभयोः अपि घोरं युद्धं प्रवृत्तम् ।

रावणः दशभिः अपि मुखैः गर्जनं कुर्वन् विद्युद्गत्या सञ्चरन् रामं लक्ष्यीकृत्य बाणवर्षणम् एव आरब्धवान् । रामः तु कौशलपुरस्सरं लीलया तेषां बाणानां खण्डनं कृत-



वान् । तस्य कौशलं श्लाघनीयम् आसीत् ।

रावणस्य नाभौ अमृतपात्रम् आसीत् । यावत् तत् अमृतपात्रं तत्र तिष्ठति तावत् तस्य संहारः साध्यः न आसीत् । एतत् रहस्यं विभीषणः जानाति स्म । सः रामसमीपं गत्वा एतत् रहस्यं श्रावितवान् । रामः ब्रह्मास्त्रप्रयोगं कृत्वा तम् अमृतकलशं भञ्जितवान् । एतस्मात् निष्प्राणः रावणस्य महाकायः भूमौ अपतत् ।

रावणवधस्य कारणतः लङ्कायां राक्षस-साम्राज्यस्य समाप्तिः जाता । विभीषणः लङ्कायाः नायकत्वेन नियुक्तः रामेण ।

रावणकुम्भकर्णयोः मरणात् जय-विजययोः अपरं जन्म समाप्तिम् अगात् ।

रामः अशोकवनतः सीताम् आनीय अवदत् - ''सीते ! दुष्टस्य राज्ञः रावणस्य संहारं कुर्वता मया राजधर्मः पालितः । रावणः बहूनि दिनानि यावत् भवतीं स्वस्य समीपे स्थापितवान् आसीत् । एतादृश्या भवत्या सह यदि अहम् अयोध्यां गच्छेयं तर्हि जनाः माम् उपहसेयुः । अतः भवती स्वतन्त्रा भूत्वा इच्छानुसारं जीवनं यापयितुम् अर्हति'' इति ।

रामस्य एतानि वचनानि श्रुत्वा सीता मर्माघातं प्राप्तवती । सा आत्मनः पावित्र्यस्य निरूपणाय अग्निपरीक्षायै सन्नद्धा जाता ।

तस्याः इच्छायाः अनुगुणम् अग्निकुण्डः सज्जीकृतः । कुण्डतः अग्निज्वालाः निर्गच्छन्ति स्म । सीता रामम् एव स्मरन्ती अग्निकुण्डं प्रविष्टवती । क्षणाभ्यन्तरे सा अदृश्या जाता ।

द्वित्राणां क्षणानाम् अनन्तरं तस्मात् कुण्डतः अग्निदेवः प्रत्यक्षः जातः । तस्य अञ्जलौ सद्योविकसितं कमलम् इव सीता विराजमाना आसीत् । ''सीता पावकः इव एव पवित्रा अस्ति । एतां स्वीकरोतु भवान्'' इति रामम् अवदत् अग्निदेवः ।

तस्मिन् समये आकाशस्थः दशरथः सर्वेभ्यः आत्मानं दर्शयन् अवदत् - ''वत्स ! रामचन्द्र ! अग्निपरीक्षातः सिद्धं यत् सीता निष्कलङ्का इति । अतः भवान् तां निस्सङ्कोचं स्वीकृत्य तया सह अयोध्यां प्रतिगत्य राज्य-शासनं करोतु । अयोध्यायाः प्रजाः भवतः प्रतीक्षां कुर्वन्ति'' इति ।

रामः शिरः अवनमय्य दशरथं नमस्कृत-वान् । ततः सर्वैः सह पुष्पकविमानम् आरुह्य अयोध्यां प्रति गतवान् च ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् -**



धनरामः जगद्रामः च प्रतिवेशिनौ । धनरामः महाधनिकः । जगद्रामश्च दरिद्रः । तस्य चत्वारः पुत्राः । तान् महता कष्टेन वर्धितवान् सः ।

अनपत्यः धनिकः धनरामः जगद्रामस्य पुत्रेषु अन्यतमं दत्तकरूपेण स्वीकर्तुं मनः अकरोत् । अतः सः जगद्रामस्य गृहं गत्वा स्वस्य इच्छां निवेदितवान् ।

धनरामस्य वचनं श्रुत्वा जगद्रामः किमपि न उक्तवान् एव । तस्य नीरसं प्रतिस्पन्दं दृष्ट्वा धनरामः अपृच्छत् - ''मित्र ! भवतः पुत्रेण एकेन एतादृशः सुवर्णावकाशः प्राप्यमाणः अस्ति । किम् एतत् भवतः सम्मतं न ?'' इति ।

इदानीं भवन्तः वदन्तु -

- किमर्थं जगद्रामः मौनेन स्थितवान् ?
- धनरामस्य उद्देशः किं स्वच्छः न आसीत् ?
- धनरामेण कृतस्य दत्तकस्वीकारप्रस्तावस्य वास्तविकः उद्देशः कः स्यात् ?
- यदि धनरामः एतं प्रस्तावं साक्षात् जगद्रामस्य पुत्राणां पुरतः एव उपस्थापितवान् स्यात् तर्हि तेषां प्रतिस्पन्दः कीदृशः अभविष्यत् ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - २८, फेब्रवरी - २००५**

नाम ---------------------- वयः ---------- जन्मदिनाङ्कः ----------

विद्यालयः ---------------------------------------- कक्ष्या ----------

गृहसङ्केतः ------------------------------------------------------

------------------------------------------------------------------

-------------------------------- Pincode --------------------

पोषकस्य हस्ताक्षरम् | भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# वात्सल्यम्

कस्मिंश्चित् ग्रामे कश्चन कृषीवलः आसीत्। तस्य मोहनः इति पुत्रः आसीत्। मोहनः अलसः दुष्टश्च। गृहे किमपि कार्यं न करोति स्म। विद्याभ्यासाय पिता तं पाठशालां प्रति प्रेषितवान्। किन्तु विद्याभ्यासे तस्य मनः न संलग्नमेव! पठनाभ्यासः सम्यक् न क्रियते इति कारणात् शालायाम् उपाध्यायेन सः द्वित्रवारं भर्त्सितः, ताडितश्च। तेनैव व्याजेन मोहनः शालागमनमेव स्थगितवान्। आदिनं ग्रामे अटन् दुष्टसङ्गेन समययापनं करोति स्म सः। पिता पुत्रस्य स्वभावेन नितरां दुःखितः। पुत्रे परिवर्तनम् आनेतुं तेन बहुधा प्रयत्नः कृतः। किन्तु कोऽपि प्रयत्नः सफलः न जातः।

काले गते मोहनः तरुणः सञ्जातः। विवाहानन्तरं पुत्रस्य जीवनं परिष्कृतं भवेत् इति धिया पिता तस्य विवाहमपि निर्वर्तितवान्। विवाहानन्तरं पुत्रः पितुः समीपम् आगत्य अवदत् –''पितः। सम्पत्तिं विभज्य मम भागं मह्यं ददातु। अहं स्वतन्त्रः सन् मम जीवनं यापयिष्यामि'' इति।

अनेन वाक्येन आश्चर्यं प्राप्तवान् पिता - ''अस्मिन् गृहे स्थितौ भवतः कः क्लेशः? गृहात् बहिः तिष्ठतु इति केन उपदिष्टम्? स्वशक्त्यनुगुणं कार्यं कुर्वन् भवान् मया सहैव वसतु। तेन ममापि सन्तोषः। पूर्वं कदापि भवता कार्यमेव न कृतम्। इतः बहिः गतं चेत् आपत्काले भवता कष्टम् अनुभोक्तव्यं भवेत्। जीवनानुभवः न्यूनः भवतः। अपि च भवान् विद्यावान् अपि न। श्रमजीवी तु सर्वथा न । अतः मया सह वसता कार्यं क्रियते चेदेव भवतः अग्रिमजीवनं सुखमयं भवेत्। मम समीपे स्थीयते चेत् कालान्तरे मम सर्वा अपि सम्पत्तिः भवदीया एव भविष्यति। भवन्तौ दम्पती विना मम अन्यः कः बन्धुः अस्ति?'' इति कथयन् दुःखावेगं सोढुम् अशक्तः सन् रुदितवान्।

''पितः, मम पुरतः भवान् मा अभिनयतु। मम विषये भवतः सर्वदा कोपः एव।। मयि किञ्चिदपि प्रीतिः नास्ति भवतः मनसि।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

एतावन्ति वर्षाणि भवान् माम् अनेकवारं निन्दितवान्, ताडितवान् च । इदानीम् अहं स्वातन्त्र्येण भवितुम् इच्छामि चेत् तदपि भवान् न सहते । इतःपरं वा अहं सुखेन स्थातुम् इच्छामि'' इति उक्तवान् मोहनः ।

पुत्रस्य कठोरवचसा पितुः मनः खिन्नम् अभवत् । किं वक्तव्यम् इत्यपि न ज्ञातं तेन । किञ्चित् विचिन्त्य स्वस्य दौर्भाग्यं निन्दन् सः पुत्रस्य इच्छां पूरयतुं सिद्धः अभवत् । तस्य मनसि अन्यदपि आगतम् यत् कानिचन दिनानि यदि पुत्रः पृथक् स्थास्यति तर्हि तस्मिन् परिवर्तनं भवेत्, पुनः मम समीपमेव आगच्छेत् इति । अतः सः निराशतया एव पुत्रम् उक्तवान् - ''पुत्र ! माम् अन्यथा मा भावयतु ! यत्र इच्छा तत्रैव भवान् वसतु । भवतः सुखजीवनमेव ममापि इष्टम्'' इति उक्त्वा पुत्रस्य भागं तस्मै दत्तवान् । मोहनः स्वस्य भागं स्वीकृत्य समीपस्थं ग्रामं गतवान् । तत्र विविधानि कार्याणि कुर्वन् जीवननिर्वहणम् आरब्धवान् च ।

वर्षमेकम् अतीतम् । मोहनः पिता जातः । पुत्रः प्रवृद्धः अपि । सोऽपि बालः पिता मोहनः इव एव अलसः । पुत्रस्य अनेन स्वभावेन मोहनः कुपितः ! कदाचित् पुत्रस्य व्यवहारेण कुपितः सन् सः पुत्रं ताडितवान् । पुत्रः तु ग्रामात् पलाय्य पितामहस्य ग्रामम् आगत्य पितामहं सर्वम् उक्तवान् ।

पितामहः पौत्रं कस्यचित् मित्रस्य गृहे स्थापितवान् । 'कानिचन दिनानि भवतः गृहे भवतु मम पौत्रः' इति मित्रं सूचितवान् च ।

मोहनः पुत्रस्य अदर्शनात् भीतः ! सः सर्वत्र पुत्रम् अन्विष्टवान् । किन्तु किमपि प्रयोजनं न जातम् । मोहनः पुत्रम् अन्विष्यन् पितुः ग्रामं प्राप्तवान् । तत्र पितरं दृष्ट्वा - ''पितः, मम पुत्रः गृहात् पलायितः । सः भवतः गृहम् आगतः किम् ? गृहे कार्यादिकं



किमपि अकुर्वन् सः सर्वदा वृथा कालहरणं करोति कारणात् इति अहं कोपं कृतवान् । एतत् असहमानः सः गृहात् निर्गतः । एतावता अपि सः न प्रत्यागतः'' इति दुःखेन उक्तवान् ।

''सः गृहतः निर्गतः चेत् किमर्थं चिन्ता भवतः ? अलसः सः अप्रयोजकः । तस्य स्थितिः, अनुपस्थितिः चेति उभयमपि समानम् एव । तेन भवतः न किमपि प्रयोजनम् । अतः भवान् चिन्तां मा करोतु'' इति पिता तं बोधितवान् ।

मोहनः निरुपायः जातः । पतिः पुत्रं विना आगतः इति पत्नी अपि क्रन्दनम् आरब्धवती । ''पुत्रस्य ताडनेन तस्य स्वभावः तु न परिवृत्तः । तद्वियोगमात्रं प्राप्तम् अस्माभिः । मम पुत्रः कीदृशे कष्टे स्यात् इति विचिन्तयन्त्याः मम महत् दुःखं भवति'' इति पतिम् उक्तवती सा ।

एकमात्रपुत्रः गृहं त्यक्त्वा गतः इत्यनया चिन्तया मोहनः आधिना पीडितः अभवत् । आहारसेवनं त्यक्त्वा आदिनं पुत्रमेव चिन्तयन् सः रुग्णः सञ्जातः । पत्नी अपि अहर्निशं रोदने एव मग्ना । बहूनि दिनानि पाकमपि न कृतवती सा । गृहे श्मशानसदृशं वातावरणम् प्रसृतम् !

मोहनस्य पिता एतां वार्तां यदा ज्ञातवान् तदा सः झटिति पौत्रेण सह मोहनस्य गृहं गतः । मोहनः पुत्रं दृष्ट्वा महता सन्तोषेण तम् आलिङ्ग्य अश्रु प्रवाहितवान् ।

पिता मोहनं सान्त्वयन् उक्तवान् - ''पुत्र ! पितुः वात्सल्यं नाम एतादृशमेव ! भवता पुत्रः ताडितः । तत्र कारणं तु सः न्यायमार्गे आनेतव्यः इति । किन्तु पुत्रविषये प्रीतिः नास्ति इति न । पश्यतु, पञ्चषाणि दिनानि पुत्रम् अपश्यता भवता कीदृशी दुःस्थितिः प्राप्ता इति । अहमपि एवमेव पूर्वं भवन्तं ताडितवान् भर्त्सितवान् च भवान् योग्यः पुरुषः भवतु इति उद्देशेन । अहं ताडितवान् इति कारणात् भवतः विषये मम प्रीतिः नास्ति इति चिन्तनम् अनुचितमेव । मया बहुभिः प्रकारैः उक्तं चेदपि भवता न ज्ञातमेव । मां त्यक्त्वा भवान् गृहात् निर्गतः । तदा मम परिस्थितिः कीदृशी आसीत् इति इदानीं भवता ज्ञातं स्यात्'' इति ।

पितुः कथनस्य वास्तविकताम् अवगतवान् मोहनः पत्नीपुत्राभ्यां सह तस्मिन् एव दिने पितुः गृहम् आगतः । क्षेत्रकार्ये साहाय्यं कुर्वन् सः सुखेन जीवितवान् ।



१८

# आर्यः

मातृप्रेमतः वञ्चितः मम पुत्रः जयानन्दाश्रमे सकुशलं जीवति इति ज्ञात्वा राजा शान्तिदेवः निश्चिन्ततया मरणं प्राप्तवान् । विद्रोहिणाम् अन्वेषणाय मरणं गतः वीरसिंहः वन्यपशूनाम् आक्रमणतः भीतः भवति । जयानन्दाश्रमस्य पवित्रताम् अवगत्य सः राजधानीं प्रति-गच्छति । जयानन्दः महत्त्वपूर्णम् उद्देशं मनसि निधाय सुखदेवस्य मेलनाय गच्छति ।

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः


















दलपतिः सुखदेवः वस्त्रान्तरं धृत्वा बहिः आगच्छति ।




प्रतिमा नारीरूपा अस्ति । भूमौ सुदृढं निखाता अस्ति सा ।



जयानन्दः दूरतः एव तां प्रतिमां पश्यति ।






जयानन्दः महादेवेन, अन्येन शिष्येण च सह तत्र उपस्थितः भवति ।




जयानन्दः दूरात् एव प्रतिमाम् अवलोकते ।










मार्गदर्शकिन गोविन्देन सह आगच्छन् आर्यः तैः दृष्टः ।



अहं राजकुमारं बहूनां सप्ताहानाम् अनन्तरं पश्यन् अस्मि ।

सः उत्तमः शासकः भविष्यति ।

सा प्रतिमा दृष्टा खलु । सा गभीरतया निखाता अस्ति । तस्याः उन्नयनाय प्रयासः क्रियताम् ।

आर्य ! किमर्थम् अहम् अत्र आनायितः ?

प्रतिमा अल्पश्रमेण एव उन्नीयते आर्येण । कर्मचारिगणः प्रसन्नाः भवन्ति ।

जय मातः !

जय जगज्जननि !

आर्यः प्रतिमायाः पुरतः उपविश्य तां नमस्करोति । ततः तां कम्पयति अपि ।

प्रतिमायाः स्वीकाराय सुखदेवः श्रद्धया भक्त्या च राङ्कवाच्छन्नौ हस्तौ प्रसारयति ।

आर्य ! एतां सुखदेवाय ददातु । सः एतां सुरक्षितस्थले स्थापयिष्यति ।

12 X 12 is 144 : Yes, right!



12 X 12 can also be 120!








How's that ?

Take *Junior Chandamama!*
If you buy a copy month after month you will spend Rs 144 in 12 months.
BUT, if you take out an annual subscription, you pay only Rs 120 and you get 12 issues!

**This concession is valid upto April 30, 2005**

## New Subscription / Renewal Form

Please enter a one year subscription for ***Junior Chandamama*** in my name ..........................................

..........................................

(If renewal, Subscription Number ..........................................)

Home address ..........................................

..........................................

..........................................

.................. PIN CODE ..................

I am enclosing Bank draft No. ..........................................

on .................. Bank for Rs. 120 / M.O. Receipt No. .................. issued by ..................

.................................... Post office.

## GIFT Subscription Form

I wish to give a one-year GIFT Subscription in favour of

Name ..........................................

Home address ..........................................

..........................................

.................. PIN CODE : ..................

Please attach the label below on the first copy.

I am enclosing Bank Draft No. ..........................................

on .................................... Bank for Rs. 120

M.O. Receipt No. .................. issued by ..................

.................................... P.O.

**This is a GIFT Subscription, with love from**

..........................................

**Town / City** ..........................................

सुखदेव ! गोविन्दः भवता सह भवतु ।
खननावसरे अन्यत् किमपि प्राप्तं चेत् अहं सूचनीयः ।

महादेव ! खननम् अनुवर्तताम् ।
कार्यं यदा समाप्स्यते तदा अहम् आगत्य निवेदयिष्यामि ।

जयानन्दः आर्यः च आश्रमं प्रतिगच्छतः ।

शान्तिपुरे ...
अरण्ये कोऽपि विद्रोही न प्राप्तः इति खलु भवान् वदति ?
आम् श्रीमन् ! ते राज्यात् अन्यत्र गताः सन्ति । मम गुप्तचरैः काचित् विशेषवार्ता आनीता अस्ति ...

...यत् काचित् स्वर्णप्रतिमा प्राप्ता अस्ति इति ।
किम् उक्तम् ? स्वर्णप्रतिमा प्राप्ता ? कुत्र ?

देव्याः प्रतिमा अस्ति सा ।
प्रतिमा देवस्य भवतु देव्याः वा, सा तु स्वर्णमयी अस्ति ! अतः सा अस्मदधीना स्यात् ।

प्रतिमा इदानीं कुत्र अस्ति ?
सा इदानीं सुखदेवस्य अधीना अस्ति इति श्रूयते ।

सुखदेवाय वार्ता प्रेषणीया यत् सा प्रतिमा मह्यम् अर्पणीया इति ।
अद्यैव सन्देशप्रेषणाय व्यवस्थां करिष्यामि ।

अनुवर्तते

# पृटोऽयं भवताम् पृटोऽयं भवताम्

## भवदर्थं विज्ञानम्

### सङ्गणकस्य बुद्धिमत्ता

प्रसिद्धः गणितशास्त्रज्ञः अलन् एम्. टूरिङ्ग्-वर्यः सङ्गणकानां बुद्धिमत्तायाः परीक्षणाय एकं क्रमं संशोधितवान् अस्ति । कश्चन पुरुषः आवृते कोष्ठे स्थाप्यते । सः उच्यते च - 'अन्यम् उद्दिश्य, सङ्गणकं च उद्दिश्य प्रश्नाः क्रियन्ताम्' इति ।

प्रकोष्ठस्थः प्रश्नकर्ता न जानाति यत् कः मानवः, किञ्च सङ्गणकम् इति । तेन प्रश्नानां द्वारा मानवसङ्गणकयोः अभिज्ञानं प्राप्तव्यम् । एषः परीक्षाक्रमः ।

निर्दिष्टे काले यदि प्रश्नकर्ता मानव-सङ्गणकयोः अभिज्ञानं प्राप्तुं न शक्नोति तर्हि सङ्गणकम् एव अधिकबुद्धिमत्तोपेतम् इति निर्णीयते । किन्तु अद्यावधि केनापि सङ्गणक-यन्त्रेण एतस्यां परीक्षायाम् उत्तीर्णता न प्राप्ता । तादृशीम् उत्तीर्णतां प्राप्तुम् अर्हस्य सङ्गणकस्य निर्माणं कथम् इति प्रश्नः अद्यापि बाधते सङ्गणकविज्ञानिनः ।



## भवतां परिसरः

### अपूर्वसस्यं - मेथिका



मेथिका प्रायः सर्वैः अपि ज्ञायते एव । एतस्य लघुनः सस्यस्य पुष्पाणि श्वेतानि भवन्ति । एतस्य बीज-कोशे १० - २० लघ्वाकाराणि धूसरवर्णोपेतानि उग्रगन्धयुक्तानि बीजानि भवन्ति । एषः उग्रगन्धयुक्तः बीजकोशः तिक्तरुचियुक्तः भवति । एतस्मिन् बीजकोषे जीवसत्त्वानि खनिजांशाः च अधिकप्रमाणेन भवन्ति । प्रोटिन्-अंशः अपि अधिकप्रमाणेन भवति ।

भारतीयपाके एतस्याः उपयोगः अधिकः । आयुर्वेदः अपि मेथिकायाः महत्त्वं विशेषतः विवृणोति ।

* रक्तशर्करांशस्य न्यूनीकरणे एतस्याः विशेष-सामर्थ्यम् अस्ति इत्यतः मधुमेहरोग-चिकित्सायाम् एषा उपकारिका ।
* एतस्याः पर्णानि जीर्णकारकाणि विशेषतः ।
* एतस्याः नियतसेवनं रक्तहीनतायाः निवारकं भवितुम् अर्हति ।
* एतस्याः पर्णैः निर्मितं लेप्यं व्रणजातां स्फीततां न्यूनीकर्तुम् अर्हति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### अङ्कन्याः इतिहासः

अङ्कनी आंग्लभाषया निर्दिश्यते 'पेन्सिल्' इति । एषः ल्याटिन् भाषायाः 'पेनिसिलस्' (penicillas) शब्दात् उत्पन्नः । पेनिसिलस्पदस्य अर्थः - 'लघुपुच्छम्' इति । प्राचीने काले रोमनुलिपिकाराः कागदसदृशस्य वस्तुनः उपरि लिखन्ति स्म । तदा ते ग्राफैट्-शलाकां रज्ज्वा वलयितां कृत्वा तदाधारेण लिखन्ति स्म । एतदेव अङ्कन्याः प्रथमं रूपम् । किन्तु एषा अङ्कनी शीघ्रं भग्ना भवति



स्म । अतः अनन्तरकाले ग्राफैट्शलाकायाः कृते काष्ठावरणं कल्पितम् । तन्नाम रन्ध्रयुक्तायां काष्ठशलाकायां ग्राफैट् पूरितम् ।

इदानीं याः अङ्कन्यः दृश्यन्ते तासां स्वरूपं कल्पितवान् तु एन्. जे. कोण्टे, यश्च द्विशेभ्यः शतकेभ्यः पूर्वम् आसीत् ।

अङ्कनीस्थः लेखनोपकरणभागः यद्यपि विषरहितेन ग्राफैट्नामकेन निर्मीयते, तथापि लोके तस्य नाम तु 'सीसम्' (Lead) इति ।

## अभिवर्ध्यतां ज्ञानशक्तिः

इतिहासः कश्चन चित्ताकर्षकः विषयः । तत्रापि भारतीयेतिहासस्तु अन्येदेशीयानाम् इतिहासात् अपि अधिकचित्ताकर्षकः । मासेऽस्मिन् भारतीयेतिहासीयं स्वस्य ज्ञानं परीक्षन्ताम् ।

१. चीनायात्रिकः कश्चन भारतीयस्य विश्व-विद्यालयस्य कुलपतिः जातः आसीत् ? तस्य नाम किम् ? तस्य विश्व-विद्यालयस्य नाम किम् ?





२. विक्रमशकस्य आरम्भः कदा जातः ?

३. अशोकीयः शिला-लेखः कश्चन भाषा-द्वयेन रचितः । सः कुत्र अस्ति ? तत्र उपयुक्ते भाषे के ?





४. रामेश्वरे विजय-स्तम्भं स्थापितवान् राष्ट्रकूटराजः कः ?

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



SOURAA



KALANIKETAN BALU

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**
योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रु. १००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





'डिसेम्बर्'मासस्य चित्रशीर्षिकाप्रेषिका
**अक्षया गोखले**
'अक्षया निवास' दुर्ग
**कार्कळ - ५७४ १२१**
कर्णाटकम्

**अतिसरलं जीवनमिदम्**
**कठिनमिदं श्रमजीवनम्**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. ह्युयेन्त्साङ्गः, नलन्दाविश्वविद्यालयः ।

२. क्रि.पू. ५८ तमे वर्षे ।

३. कन्धराप्रदेशे । अराबिक् ग्रीक् च ।

४. कृष्णः (द्वितीयः)

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 62, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

**CHANDAMAMA** (Sanskrit) **FEBRUARY 2005**
Regd No. TN/PMG(CCR)-589/03-05
Regd. with Registrar of Newspaper for India No. 42664/85
Licensed to post without prepayment No. 371/03-05 Foreign - WPP. No. 372/03-05

**PCRA Page** **Website : www.pcra.org**

# मौनस्य मधुरः स्वनः



वीणायाः स्वास्थ्यं सम्यक् नास्ति । कर्णवेदनाम् असहमाना सा समग्रां रात्रिम् अनिद्रया पार्श्वपरिवर्तनेन च यापितवती । उषःकाले तया अल्पा निद्रा प्राप्ता इव । अत्रान्तरे गृहपरिसरस्य शान्ततां भञ्जयन् कश्चन कार्यानवाद्यध्वनिः उच्चैः श्रुतः । तस्मात् वीणा जागरिता जाता । तस्याः कर्णवेदना पुनः उद्बुद्धा ।

''वत्से ! स तु कार्यानस्य वाद्यध्वनिः । मातुलं नरेशं नेतुम् आगतम् अस्ति तत् यानम् । सः प्रतिदिनं मित्रस्य यानेन गच्छति इति स्मरति खलु भवती'' इति प्रकोष्ठं प्रविशन्ती क्षीरचषकहस्ता माता अवदत् ।

वीणा तु न किमपि स्मरति इदानीम्, ऋते कर्णवेदनायाः । सा असन्तोषेण अपृच्छत् - ''अम्ब ! किमर्थं सः यानचालकः अन्येषां विषये एवम् उदासीनः? किमर्थं सः एवम् उच्चैः यानवाद्यशब्दं करोति?'' इति ।

''केचन एवं भवन्ति वत्से ! ते यानात् अवतीर्य गत्वा आह्वातुं न इच्छन्ति । याने एव उपविश्य उच्चैः शब्दं कुर्वन्ति । ध्वनिमालिन्यविषये सर्वथा अवधानरहिताः ते'' - माता अवदत्।

तावता तं प्रकोष्ठं प्रविशन् पिता अवदत्- ''उच्चैः शब्दकरणं शिक्षार्हः अपराधः इति किं भवत्या ज्ञायते ? नगरे नियमः अस्ति यत् यानवाद्यध्वनिः १९ डेसिमल्तः अधिकः न भवेत् इत्यस्ति नियमः । नगरपरिसरे वायुवाद्यस्य उपयोगः निषिद्धः अपि । किन्तु बहवः यानचालकाः एतं नियमं न पालयन्ति । केचन एतदर्थं दण्डिताः भवन्ति अपि तदा तदा । तथापि अदण्ड्यमानाः एव बहवः । अतः ध्वनिपीडा वर्धमाना एव दृश्यते'' इति ।

''शब्दमालिन्यस्य कारणतः कर्णयोः बधिरता, रक्तचापाधिक्यं, हृदयस्य बाधा इत्यादयः वर्धन्ते'' इति अवदत् माता ।

''यानचालकाः अन्येषां हितविषये अवधानवन्तः भवेयुः इत्येषः एकः एव अत्र परिहारः । अत्र अस्माकम् अपि कर्तव्यम् अस्ति । यदि कश्चित् अस्मान् नेतुम् आगच्छति तर्हि तस्य उपस्थितितः पूर्वम् एव अस्माभिः मार्गपार्श्वे स्थातव्यं, येन शब्दकरणस्य आवश्यकता न भवेत् । अस्मत्पृष्ठतः अन्यानि यानानि भवन्ति इत्यपि सदा स्मरणीयम्'' इति विवृतवान् पिता।